*Kashmir Series of Texts & Studies No.: 90*

Panchastavi Mala : 1

# (i) LAGUSTAVA

# (ii) CARCASTAVA

WITH COMMENTARY

*by*

*( late )* **Pandit Harabhatt Shastri,**

**Formerly Head Pandit**
**(Oriental) Research Department,**
**Jammu & Kashmir Government.**

*Editor :*

DINA NATH YACH SASTRI

**Head Pandit,**
**(Oriental) Research & Publication Deptt.,**
**Jammu & Kashmir Government,**
SRINAGAR—KASHMIR

'पञ्चस्तवी'माला : १

# लघुस्तवचर्चास्तवौ

## हरभट्टीव्याख्योपेतौ

यक्षोपाह्वेण पण्डितदीनानाथशास्त्रिणा
सम्पादितौ

जम्मू–कश्मीर–राजकीय–
शोध–प्रकाश–विभागेन
प्रकाशितौ

## CONTENTS

## PREFACE

Sri Panchastavi the pentad of devotional hymns in praise of the Godess or Shakti is of unknown authorship though Pandit Harabhatta Shastri the Commentator of this publication ascribes it to Dharmacarya. The evidence, however, is not conclusive.

These hymns have a special significance for the practical devotees of the Trika cult of Kashmir Shaivism. It has, therefore, been held in high esteem from quite ancient times in this part of the country.

The present work is a commentary on this devotional poem by Late Pt. Harbhatta Shastri formerly Head Pandit of this Department.

Pt. Harabhatta was born in 1874 in a Kashmiri Brahaman family and received his early education in the traditional way under the guidance of his father Pt. Keshava Zadoo and passed his Shastri examination from the Rajakiya Pathshala in 1898. Later on he was initiated in the Saivaist order by Shri Mukunda and the young scholar devoted himself to the study of the Saivaist literature. In view of his scholarship he was appointed as a Pandit in the Oriental Research Departmeat of the State and retired in 1947 after a distinguished service to the cause of Sanskrit and Saivist learning. His scholarship and deep understanding of

the Saiva philosophy won him the esteem of distinguished scholars like Dr. K. C. Pandey of Lucknow University, Prof. H. Woods and Mr. D B. Spooner of the Harvard University U. S. S. He passed away in 1951.

Apart from the present work Pandit Harbhatta Shastri has compiled a commentary on Ajadapramatri Siddhi of utpala, vivarana on Bodhapanchdasika and Parmartha-Caraca.

The present work is the study and exposition of Sri Panchastavi mainly from the Saivaist point of view in the old othodex way.

The department is grateful to the Government of Jammu and Kashmir whose munificence has made it possible to publish this master-piece of Pt. Harabhatta Shastri, the last of the great orthodox scholars.

Our thanks are also due to Shri Amritvagbhava Charya of Bharatpur for his learned introduction in Sanskrit.

EDITOR



उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां
सिंहासनोपरिगतामुरगोपवीताम् ।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां
राज्ञीं भजामि विकसद्वदनारबिन्दाम् ।।

## श्रीः

## प्रास्ताविकम् ॥

---

विद्वद्वृन्दैरभिमतफलप्रेप्सुभिः सन्ततं या
स्तोत्रस्तोमैर्मधुरमधुरैः स्तूयसे भक्तिनम्रैः ।
श्रद्धोपेतैरखिलनिगमागोचरस्वात्मरूपे
सा पाहि त्वं निजशरणगं साम्प्रतं विश्वमातः ॥

(मन्दाक्रान्तास्तोत्रम्)

श्रीविद्याचरणाम्भोजमध्वास्वादनपटुचञ्चरीकास्तत्रभवन्तः सहृदयाः पाठकमहोदया इमां श्रीपञ्चस्तवीं हरभट्टशास्त्रिमहोदयविनिर्मितटीकया समलङ्कृताम् इदानीं सम्मुद्रय प्रकाशिताञ्चाधिकृत्य किञ्चित्प्रास्ताविकं श्रोतुं प्रार्थ्यन्ते ।

जायमानः सर्वोऽपि भावो ब्रह्मा वा मानुषो वा कीटो वा प्रस्तरोऽपिवा भवतु जन्तुरेव स इत्यपूर्णसामर्थ्य एव भवितुमर्हति । स्वस्वसामर्थ्यमनुरुन्धान एव च स्वं परं चानुग्रहीतुं निग्रहीतुं च तदर्थमेव चेष्टुं ज्ञातुं कर्तुं यतते पारयति च । यो यश्च यावति व्यवहारेऽसमर्थस्तावत्येव स परतन्त्र इति स्वतोऽधिकं कञ्चिदन्यं समर्थमन्विष्यति स्वात्मानमधिकाधिकं सामर्थ्यसमृद्धं कारयितुम् । सम्प्राप्य चेमां सर्वामपि स्वातन्त्र्यसमृद्धिं यथाभिलाषमनुग्रहीतुं निग्रहीतुं च समुपयुनक्ति । आर्यश्चेत् स आर्यभावमनुगृह्णाति निगृह्णाति चानार्यभावम् । अथानार्यो वैपरीत्यम-

वलम्बते सः। सर्वथाऽप्येतत्तु निश्चप्रचमेव यद् यो यः शक्नोति भवितुं स स एव भवति सर्वथा नान्योऽतथाविधः। अत एव स्वयमसर्थः स्वाभिलषितपूरणाय स्वतोऽन्यं समर्थं स्तवीति स्तोत्रस्तोमैर्बहुभिरपि प्रकारैः। समर्थस्य खल्वनन्ता एव प्रकाराः। तान् सामस्त्येन को वा बर्णयितुं गणयितुं वा प्रभवेज्जन्तुः। समस्तस्यापि स्तोत्रवाङमयस्य प्रभवे निदानमिदमेव। स्तोता चेद्वस्वभिलाषी त्वं महान् वसुप्रदः स चेद्विद्याभिलाषी त्वं महान् विद्याप्रदानधुरीणः इत्यादिशतशतवाक्यैः स्तौति तं यतोऽभिलाषः पूर्तिमेष्यतीति सम्भावयति। अत एवाभियुक्ताः स्तोत्राणां समासेन षड्विधत्वं वर्णयन्ति। यथाहुस्ते

नमस्कारस्तथाशीश्च सिद्धान्तोक्तिः पराक्रमः
विभूतिः प्रार्थना चेति षड्विधं स्तोत्रलक्षणम्॥ इति।

भारतवर्षे हि संस्कृतवाङमये स्तोत्राण्यनन्तान्येवोपलभ्यन्ते। तत्र गणेशसूर्यविष्णुशिवदुर्गादिदेवतानां बहूनि स्तोत्राणि सन्ति। अपर परापरपरसामर्थ्यवत्सु परसामर्थ्यवांस्त्वेक एव परमेश्वरः यस्य स्तोता परं सामर्थ्यं स्वात्मन्यनुभवितुं पारयेत। स परमपरमेश्वर एव खलु श्रीललितापराम्बा राजराजेश्वरी महाषोडशी महात्रिपुरसुन्दरी महाकामेश्वरी महाकामकलेत्यादिनामधेयैः सर्वज्ञैरात्मविद्भिर्हृदये समाविश्यते।

इदमात्रेच्यते खलु संस्कृतवाङमयाध्ययनरसिकानां पुरस्तात् तत्रभवन्तः सर्वविधा अपि पाठकमहाभागा जानन्त्येवैतद् यत् संस्कृतवाङमयं ह्यभिनवरमणीये परशिवरूपे विश्वस्मिन्नपि विश्वमण्डले सर्वातिशायि महिमानमावहतीति। नात्र कोऽपि विप्रतिपत्त्यवसरः कस्यापि विद्वत्तल्लजस्य। एतद्धि संस्कृतवाङमयमसंख्यैर्ग्रन्थरत्नैरलङ्कृतमद्यापि विराजतेतमामेव, यद्यपि संस्कृतिं संस्कृतं चाक्षिगतं मन्वानैर्वैदेशिकापसदैः कैश्चिद् वैधर्मिकापसदैश्च संस्कृतिमहत्त्वं संस्कृतमहत्त्वं चाविजानानैः सदेश्यैः सधर्मिभिर्मूढैर्मूढतनयैश्च काले कालेऽत्यर्थं विनाशयितुं प्रायति।

श्रीमहाविद्या पराम्बा कारुण्यपरिपूर्णया दृशा यावत्पर्यन्तं संस्कृतं संस्कृतिं चावलोकयते तावत् कः खलु जनः सर्वथा नाशयितुं प्रभवेत्।

इदमस्माकं भारतवर्षं हि संस्कृतस्य संस्कृतेश्च जन्मभूमिः। कन्याकुमारिकाक्षेत्रमेतद् बाह्यतोऽपि मूलत्रिकोणाकारम्। सर्वमपिविश्वं त्रिकोणनवकात्मकंश्रीचक्रमेवाद्भुतम्। कन्याकुमारिका बालात्रिपुरसुन्दरीति च नार्थान्तरम्। अत एवाऽसंख्यावतीषु विद्यासु प्रामुख्यमावहन्तीषु कालीप्रभृतिषु दशस्वपि महाविद्यासु श्रीमहात्रिपुरसुन्दर्येवाद्यन्तसाक्षिणीति सर्वतः परिपूर्णेति च केवलं श्रीपदपूर्वैव श्रीविद्येति निगद्यते निगमागममर्म्मविद्भिः। सर्वा अपि विद्या विद्या एव, यतस्ता एताः सर्वा अप्यात्मानं श्रीविद्याभावेन प्रत्यभिज्ञातुं प्रयतन्ते। परं पृथक् पृथग् नाम च रूपं चात्मत्वेन सम्प्रधार्य विलसन्त्य एता गभस्तय इव गभस्तिमन्तं श्रीत्रिपुरसुन्दरीश्रीविद्यारूपं परमेश्वरमुपजीवन्ति। श्रीविद्या च पूर्णस्थानीया शून्यस्थानीया चेत्युदयास्ताधिष्ठानभूता एकद्वित्र्यादीनां नवानामङ्कानामिव दशमी महाविद्या। इयमेव स्वात्मन्यधिष्ठाने बहिरिवोन्मुखीभूतेव विलसन्ती स्वात्मप्रत्यभिज्ञानिष्णातैः पण्डितप्रकाण्डैः सर्वातिशायिबलवतीति श्रीबालात्रिपुरसुन्दरीतिप्रत्यक्षमिष्यते ज्ञायते क्रियतेऽपि। प्रथमं तुर्यायां भूतिरूपिण्येवेयं सुषुप्तावनुभूयते, स्मर्यते च स्वप्ने, जाग्रति विस्मर्यतेऽपि। इयं श्रीत्रिपुरसुन्दर्येव बालादशामुल्लङ्घ्य मध्यमां दशामधितिष्ठती शान्तघोरघोरतमैरूपैर्नामभिश्च पञ्चविधकृत्यानीच्छन्ती जानती कुर्वती च पञ्चदशदशा दिशाः प्रदर्शयन्ती स्वात्मनि भूतिमनुभूतिं स्मृतिं विस्मृतिं च विलासयति। पूर्वं विमृष्टस्य प्रकाशनं प्रकाशितस्य च पुनर्विमर्शनं द्वयमप्येतद् विलास एव। इयं श्रीत्रिपुरसुन्दर्येव पञ्चदशीदशामुल्लङ्घ्योत्तमां दशामलङ्कुर्वतीव बहिर्मुखीभूतेव सर्वं स्वात्मश्रीचक्रं पारिपूर्ण्येन समरसीभावेन समधिष्ठितवती विश्वमयीति षोडशीं कलां विश्वमपि विश्वं प्रत्यभिज्ञापयितुं प्रयतत इवेति षोडशीति विभाव्यते स्वात्मदर्शिभिः। एवं च बालारूपमिच्छाप्रधानं पञ्चदशीरूपंज्ञानप्रधानं षोडशीरूपं च क्रियाप्रधानमिवेति विवेचयन्तु सुधियः। अत एवोक्तं श्रीशिवसूत्रेषु "इच्छाशक्तिरुमाकुमारीति" इयं बाला भगवत्येव भारती त्रिपुराभावेन स्वात्मानं भावयन्ती भारतीयेभ्यो भारतत्वं भारतीयत्वं च प्रददती परिपूर्णं स्वात्मस्वातन्त्र्यं साक्षात्कारयति तान्। अत एव दिव्यविद्येयं

श्रीत्रिपुरसुन्दरी श्रीविद्येति नामधेयवती सर्वाग्रपि महाविद्या अतिशयाना आगमेषु निगमेषु च स्तूयते। अनन्ताः किल स्तुतय उपलभ्यन्तेऽस्याः श्रीविद्यायाः।

भारतीयवाङ्मये माहानेव खलु महिमा स्तोत्राणां विद्यते। तत्र श्रीविद्यायाः स्तोत्रेषु ब्रह्माण्डपुराणीयं श्रीललितादव्यिसहस्रनामस्तोत्रं श्रीललितात्रिशती स्तोत्रं तत्रभवतो भगवतो दुर्वाससः श्रीत्रिपुरामहिमस्तोत्रं श्रीललितास्तवरत्नं श्रीगौडपादानां सुभगोदयः श्रीशङ्कराचार्याणां श्रीसौन्दर्यलहरी श्रीधर्माचार्याणां श्रीपञ्चस्तवी श्रीमूककविसार्वभौमस्य मूकपञ्चशती सत्यानन्दनाथापरनामधेयश्रीसामराजदीक्षितानां मानसपूजेत्यादिस्तोत्राण्यतीव महिमावन्तीति श्रीविद्योपासकधौरेयाणां नास्त्यविदितम्। श्रीविद्योपासनासम्बन्धि वाङ्मयमतीव विस्तृतमस्ति। एतद्विषये "श्रीपरशुरामकल्पसूत्रं" "श्रीविद्यारत्नसूत्रं" "श्रीनागानन्दसूत्रं" "श्रीविद्यार्णवः" "श्रीसौभाग्यरत्नाकरः" श्रीपूजारत्नं, "श्रीसुन्दरीमहोदयः" "श्रीसौभाग्यभास्करः" "श्रीसौभाग्यसुधोदय" इत्यादयोऽनेके ग्रन्था इदानीमप्युपलभ्यन्ते। अस्तु तावत्। श्रीस्तोत्रेषु श्रीसौन्दर्यलहरीं तु पुनरनेकाष्टीका अपि समलङ्कुर्वन्ति। तासु सम्मुद्रय प्रकाशिता अपि बह्व्यः। किन्त्वत्यन्तं सुप्रसिद्धापि श्रीपञ्चस्तवी मूलमात्ररूपा मुद्रिता प्रकाशनं प्राप्ताऽपि। अस्यां खलु अतीवमहिमावन्त्यतीव सारगर्भितानि पञ्च स्तोत्राणि सन्ति। अत्र प्रथमो लघुस्तवः। अस्मिन् मूलमन्त्रः श्रीबालाभगवत्याः। तमवलम्ब्यैव च श्रीविद्याया अनेकेषां रहस्यभूतानां मन्त्राणामुद्धारो मन्त्रोपासनाध्यानानि तेषां फलानि मन्त्रपारायणक्रमोद्धारो नाम पारायण क्रमोद्धार इत्यादिबहुरहस्यं वर्णितमस्ति। एकविंशतिश्लोकात्मकोऽयं स्तवः केरलेष्वेकविंशतिकेति प्रसिद्धः। एतत्स्तोत्रान्तर्गतं मायाकुण्डलिनीत्रिश्लोकमुत्तरप्रदेशराजस्थानादिप्रदेशेषु विजयापानावसरे विजयामभिमन्त्रयितुं परःसहस्राः पण्डिताः पण्डितपुत्राश्चपठन्ति। काश्मीरदेशे मूर्खोऽपि ब्राह्मणबालकः श्लोकमेनं पठन् दृश्यत एव। अस्य स्तोत्रस्योपरि काश्चिट्टीका अप्युपलभ्यन्ते। तत्र "अनन्तशयनत" एका श्री टी० गणपतिशास्त्रिणां सम्पादकत्वे मुद्रितापि। द्वितीया षट्शतवर्ष-

भ्यः पूर्वं जैनाचार्येण निर्मिता 'नागपुरतः' वैद्यप्रवरआयुर्वेदमहोपाध्याय-छाङ्गाणीत्युपाह्व-पण्डितगोवर्धनशर्मभी राष्ट्रभाषानुवादसहिता मूलमात्रस्तोत्रचतुष्टयसहिता चास्मत्सम्पादकत्वे प्रकाशिता। तृतीया लघुबृंहणी सहस्रद्वयश्लोकपरिमिताऽद्याप्यमुद्रिता मद्रासराजकीयपुस्तकालये वर्तते। चतुर्थी पञ्चमी च अज्ञातकर्तृके काश्मीरेषु हस्तलिखिते स्तः। ते अपि विरलविरले एव। षष्ठी नित्यानन्दविरचितोल्लेखमात्रगम्या। महदेव खलु हर्षास्पदमेतद् यदिदानीं "काश्मीरराजकीयप्रत्नविद्याप्रकाश" "रिसर्च" कार्यालयः काश्मीरिकविद्वद्वर्य-दिवङ्गत-पण्डितवर्य श्रीहरभट्टशास्त्रिभिर्निमितां पञ्चानामपि स्तवानां टीकां सम्मुद्रय प्रकाशयन्नस्ति।

इमां सुविस्तृतां सारगर्भितामतीवमहत्त्वशालिनीं टीकामधीत्य परमं मनस्तोषंप्राप्नुवाना अध्येतारः स्वयमेवास्या गुणगरिमाणं गायन्तो विलापयन्तश्च सफलयिष्यन्ति टीकाकृतां हरभट्टशास्त्रिणां प्रशस्यतमं प्रयत्नम्। इयं पञ्चस्तव्याष्टीका वि० सं० १९९२ वर्षे श्रीहरभट्टशास्त्रभिः स्वयमेवास्मभ्यं दर्शितासीत्। चिरपरिचितास्तेऽस्माकम्। अत्रेदं महदेव खेदावहमस्माकं यत्तेषां सम्मुखं नांशतोऽप्यस्या मुद्रणमभूत्। दिव्यलोकमधितिष्ठन्त एव त इमां द्रक्ष्यन्तः परितोषं प्राप्नुवन्त्विति श्रीपराम्बां प्रार्थयामः। भवतु। अथास्या प्रणेता कः कुत्रत्यः किंकालिकश्चेत्येतद्विषये किञ्चद्विचार्यते श्रीकालिदासः प्रणेतास्या इतिवाणीविलासमुद्रणालये, मुद्रितायां मुद्रितमस्ति। महाविद्वान् श्रीलक्ष्मीधरः श्रीसौन्दर्यलहरीव्याख्यायां पञ्चस्तव्याः श्लोकं कलिदासकृतित्वेन समुद्दङ्कते। केषाञ्चिन्मते आचार्यश्रीमदभिनवगुप्तपादा एव पञ्चस्तव्याः प्रणेतारः। अथ तेषां कोऽप्यविज्ञातनामधामा शिष्यः पञ्चस्तव्याः प्रणेता यः श्रीमदभिनवगुप्त पादानां बरदहस्तं मस्तके स्वस्तीकृत्य सद्यः स्फुरितवाग्भवादिमन्त्रप्रभावः ललितललितैः पञ्चभिःस्तवैर्जगदम्बां श्रीराजराजेश्वरीमस्तौदिति केचित्। बहुषु हस्तलिखितलघुस्तवपुस्तकेषु लघ्वाचार्यः कोऽप्यस्याः पञ्चस्तव्याः प्रणेतृपदे लिखितः। वर्णयन्ति च "सञ्चिन्त्यापि लघुत्वमात्मनीति" पद्यांशं प्रमाणत्वेन केचित्, कस्मिंश्चिद्धस्तलिखितपुस्तके अशम्भुनाथशिष्य आचार्यश्रीपृथ्वीधरः प्रणेतृपदे स्थापितोऽस्ति। अथैकस्मिन् हस्त-

लिखितपुस्के शेषरामचन्द्राचार्यः प्रणेता इति दृश्यते ।

अथ श्रीभोजमहाराजः "सरस्वतीकण्ठाभरणे" आचार्यश्रीमम्मटः "काव्यप्रकाशे" श्रीशिवानन्दो 'मातृकाचक्रविवेकव्याख्यायां' माधवाचार्यः "सर्वदर्शनसंग्रहे", श्रीमानप्पयदीक्षितः "कुवलयानन्दे", विरूपाक्षनाथः विरूपाक्षपञ्चाशिकाव्याख्यायां पञ्चस्तव्याः पद्यानि पद्यांशांश्च समुल्लिखन्ति । किन्तु न तत्र पञ्चस्तव्याः तत्प्रणेतुर्वा नाम दृश्यते क्वापि । श्रीविद्यार्णवे, 'श्रीसौभाग्यरत्नाकरे' च पञ्चस्तवीपद्यान्युद्धृतानि सन्ति तेषां प्रणेता श्रीधर्माचार्य इत्युल्लिखितं तेषां प्रणेतृभिः श्रीविद्यारण्यपादैः श्रीनित्यानन्दनाथैश्च । अथ श्रीनित्यानन्दः श्रीत्रिपुरामहिमस्तोत्रव्याख्याकारः पञ्चस्तवीश्लोकं समुद्धरति श्रीधर्माचार्यञ्च तत् प्रणेतारं समुल्लिखति । अथ नित्यानन्दनाथेन लघुस्तवटीकापि विरचितासीत् । तत्रापि धर्माचार्यमेव प्रणेतारं संस्मरति श्रीनित्यानन्दः । अतो निश्चितं वक्तुं शक्यते यदस्याः प्रणेता श्रीधर्माचार्यनामधेय एव । वि० सं० १९९७ वर्षेऽस्मत्प्रकाशितायां मूलमात्ररूपायां 'श्रीपञ्चस्तव्यां श्रीधर्माचार्य एव प्रणेतृत्वेन स्वीकृतोऽस्माभिः । श्रीहरभट्टशास्त्रिणोऽप्येतदेव सम्मन्वते । वि० सं० १९८९ वर्षेऽस्मत् सम्मतिरपि तैर्गृहीतासीत् । अस्य धर्माचार्यस्य स्थितिकालविषये चैतदेव वक्तुं शक्यते यदयं महाराजभोजतः प्राचीनः । महाराजभोजश्च वि० सं० १०५० वर्षे जीवित आसीत् कुत्रत्य इत्येतद्विषये च दक्षिणात्योऽयमिति वक्तुं शक्यते । यतः पञ्चस्तव्यां स्थले स्थले शबरीं पूज्यत्वेन सङ्केतयति । शबरीपूजाचेयं महाराष्ट्र-कर्णाटककेरलादिषु विन्ध्यतो दक्षिणप्रदेशेष्वतीव प्रसिद्धा । तेषु जनपदेषु चेमां शबरीमेवैकवीरा-रेणुका-कुङ्कणा-यल्लम्मादिपदैर्निर्दिश्य गृहे गृहे ग्रामे ग्रामे नगरे नगरे कुलदेवतारूपेण आब्रह्मणमाचाण्डलान्तं जनाः प्रायः पूजयन्ति अतो वयं दाक्षिणात्य एवायं भवेदितिसम्भावयामहे ।

पञ्चस्तव्यामस्यां षड्विधान्यपि स्तोत्रलक्षणानि सन्ति । नमस्कारा आशिषः सिद्धान्तोक्तयः, पराक्रमा. विभूतयः प्रार्थनाश्च सर्वमप्येतत् स्थले स्थले वर्णितं वितत्य विवेचितं श्रीहरभट्टशास्त्रिभिष्टीकायां विद्वद्भिः

सुनिपुणं सुनिरीक्षणीयम् । अतस्तद्वर्णनस्य नात्रापेक्षेति ।

अन्तःशून्यो बहिरपि घटःशून्य एवाम्बरान्तः
अन्तःपूर्णो बहिरपि तथा पूर्ण एवार्णवेऽस्ति ।
एवं मातस्त्वमसि सततं शून्यपूर्णस्वरूपा
तत्त्वोत्तीर्णाऽप्यहमनुभवा तत्त्वरूपा त्वमेव ॥

(मन्दाक्रान्तास्तोत्रम्)

इत्येवं भगवतीस्वभावविमर्शं प्रकाश्य विरमामो लेखादस्मात्प्रास्ताविकात् ॥

अमृतवाग्भवाचार्यः



# शुद्धिपत्रम्



पुस्तकाध्ययनात् प्राक् निम्नाङ्कितास्त्रुटय अवश्यं संशोधनीयाः।

| पृष्टम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | १८ | युष्माकमघ | युष्माकमघं |
| २१ | १ | कर्ण या दसाद्वयस्यतु, | सा यदा कर्णद्वयस्यतु |
| ३२ | ५ | तृतीयबीज | तृतीयबीजं |
| ४७ | २ | उरुद्वयं | ऊरुद्वयं |
| ७० | ७ | सन्त्यस्यमिति | सन्त्यस्यामिति |
| १६ | २२ | कर्तृत्बसयोजन | कर्तृत्वसंयोजन |
| १०२ | ४ | (श्लोके) स्वरादिभिथो | क्षान्तगतैः स्वरादिभिरथो |

द्वितीयस्तवे

| | | | |
|---|---|---|---|
| २ | २१ | भाविस्वेश्वर्यपद | भाविस्वैश्वर्यपद |
| ३ | १६ | अर्थन्तिराणि | अर्थान्तराणि |
| ६ | २ | स्तुतिकर्तकता | स्तुतिकर्तृकता |
| ११ | १४ | प्र० हृ० श्लो० ९ | प्र० हृ० मं० श्लो० १ |

Index No. III of 2nd Stava शीर्षके द्वितीये स्तवे निर्दिष्टानामाचार्याणामिति स्थाने द्वितीये स्तवे निर्दिष्टानां विशिष्टपदानामनुक्रमणिकेयमिति।

## पञ्चस्तव्याः प्रथमस्तवान्तर्गतानां श्लोकानामकाराद्यनुक्रमेणानुक्रमणिका

## पञ्चस्तव्या द्वितीयस्तवान्तर्गतानां श्लोकानामकाराद्यनुक्रमेणानुक्रमणिका



पण्डित हरभट्ट शास्त्री
जन्म १८७४—मृत्यु १९५१

# ओं नमस्त्रिपुरसुन्दर्यै

---

जगद्रत्नैः पूर्णे परशिवसुधाब्धौ सुगहने
परानन्दोद्रेकोच्छलितवपुरत्यर्थममितेः ।
परामर्शौन्मुख्याद्बहिरिव विहर्तुं समुदिता
परा काचिद्रस्या स्फुरतु मम सौभाग्यलहरी ॥१॥

शिवः पूर्णः स्वात्मारमणरसशीलोऽपि न विना
क्षणं यामप्यास्ते निरवधिनिजानन्दवपुषम् ।
परा सौभाग्यश्रीः परशिवरहोनर्मसुखभूः
शिवं सा नः पूर्णप्रथनमयमन्तर्वितनुताम् ॥२॥

भावौधान् या क्रमपरिगतान् दर्पणे स्वात्मसंवि-
द्रूपे त्रेधा तिसृभिरपराख्यादिभिः स्फारयन्ती ।
पञ्चस्तव्यां नवनवविधोल्लेखिनी प्रातिभाख्या
वाच्यार्थान् सा प्रकटयतु मे शारदा व्याचिकीर्षोः ॥३॥

धर्माचार्यचमत्कृतिर्जगति या विद्वन्मनोरञ्जिनी
सद्वाच्यार्थरसोज्ज्वला परमहामन्त्रानुभूनिर्भरा ।
बाले व्योम्नि घटेऽपि निर्विलसते संचारचातुर्यभाक्
तस्या व्याकरणोद्यमोऽयमुदितः सच्चोदनातोऽपि मे ॥४॥

---

# पञ्चस्तव्यां

## लघुस्तवटीका

स्वस्वातन्त्र्यात् प्रथममुदिताग्राणनाबस्फुरत्ता-
भूमिं श्रित्वा षडयनमहावाच्यशब्दौघगर्भाम् ।
विस्फार्यानुत्तररसमहानादभूमिं क्रमेण
या वाग्विश्वं रसयति परां तां श्रये मन्त्रभूमिम् ॥

उों नमस्त्रिपुरसुन्दर्यै । इह खलु पारमेशषडर्धशासनेषु प्रष्टृप्रतिव-क्तृत्वसम्बन्धोद्भावनक्रमेण परम्परयानुग्राह्यानुजिघृक्षारससरसहृदयेन श्रीसादाशिवभट्टारकेण स्वयं गुरुशिष्यभूमिकाग्रहणपूर्वं—

'गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः ।
पूर्वोत्तरपदैर्वाक्यैस्तन्त्रमाधारभेदतः ॥'

इत्युक्तनीत्या परादिसम्बन्धषट्कक्रमतोऽवतारितेषु प्रकाशानन्दैक-घनमेकमेव परसंवित्तत्त्वमशेषसंविद्विश्रान्तिसतत्त्वं प्रकाशमानतान्यथा-नुपपत्त्या विश्वानुगतत्वेन परिस्फुरत्तया प्रकाशमानमाम्नायते । (तदे-वानुत्तरप्रक्रियासु कुलादिशब्दव्यपदेश्यत्वेन गीयते ।) यदुद्भविष्यत् शि-वादिक्षित्यन्तषडध्वस्फारात्मविसृष्टौ प्रसरच्छिवशक्त्यादिनियतव्यपदे-शासहिष्णुतयानाख्याद्यभिधैरुपचर्यते । यदुक्तम्—

'यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च ।
तत्कुलं विद्धि सर्वज्ञ ! शिवशक्तिविवर्जितम् ।।' इति ।

तदेव स्वस्वातन्त्र्यात्सदा पञ्चविधकृत्यकारिस्वभावतया—

'स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम् ।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते ।।'

इत्युक्तस्थित्या मयूराण्डरसवत्स्वान्तस्तादात्म्येन संस्थितस्य विश्वस्यावबिभासयिषया मुकुरप्रतिबिम्बवद्भेदाभेदाद्यात्मतया प्रस्फुरत् तथा तथा प्रकाशते । प्रकाशमानमपि विश्वं स्वस्मिन्नुपसंहरते चेति विश्वोदयविलयास्पदत्वात् 'सदेव सोम्येदमग्र आसीत्' छां. उ. (६.२.१) 'एकमेवाद्वितीयं ब्रह्म' (त्रि० म० ता० ३.३) 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः । एवंभूतं च तत्पूर्णाहंभावपरामर्शसारमहामन्त्रात्मकतया स्वात्मसात्कृताशेषवाच्यवाचकावमर्शसतत्त्वं स्वतन्त्रप्रकाशैकघनं 'परं ब्रह्मेति' 'पराशक्तिर्' इति प्रकाशविमर्शाविभागकलनया दिव्यदम्पतीयुगलत्वेन प्रस्फुरति—

"स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याददद्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत्" ।। इति
(ई० प्र० १.१.४७)

प्रत्यभिज्ञोक्तनीत्यानुत्तरैकरूपमपि विभागेनाभासितम् । तथाच श्रुतिः—

'आत्मैवेदमग्र आसीत् पुरुषविधः, सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्, सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्, तस्मादप्येतर्हि आमन्त्रितोऽहमयमित्येवाग्रे उक्त्वाथान्यन्नाम ब्रूते' इत्यादि । (बृह० १.४.१.१७)

तथा—

'स वै न रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च

पत्नी चाभवताम्' इति। (बृह० १.४.३)
वस्तुतस्त्वेकमेव यामलस्वरूपम्। यदुक्तम्—

'न शिवेन विना देवी न च देव्या विना शिवः।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव' ।। इति

तथा—'न शिवः शक्तिरहितो न शक्तिः शिववर्जिता।
यामलं प्रसरं सर्वम्'इत्यादि ।।

एतदभिप्रायेण सकलस्वरूपभावनायामपि 'स्त्रीरूपं वास्म रेद् देवि ! पुंरूपं वा विचिन्तयेत्' इत्युक्त्या, 'यथेच्छयाविकल्पेन स्वाभिन्नपरदेवता' भावना विधेयेत्युक्तम्। श्रुतिश्च :—

'नैव स्त्री न पुमानेष न चैवायं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन स रक्ष्यते' ।। इति
(श्वेताश्व० ५–१०)

श्रीभागवतेऽपि—

"स वै न देवासुरमर्त्यतिर्यङ न स्त्री न षण्डो न 'पुमान्नजन्तुः 'इति एतेन 'निष्कलं परं तत्त्वम्' ति द्योतितम्। एवं 'ब्रह्म वा' इदमग्र आसीत्; तदात्मानमेव वेदाहं ब्रह्मास्मीति, अ इति ब्रह्म तत्रागतमहं" इति (मैत्रा० ६-१७) श्रुतेरन्तःस्वीकृतानुत्तरानन्दादिस्पन्दमयाकृत्रिमविमर्शमयी सैव पराभट्टारिका आदिक्षान्तमातृकामयाशेषमन्त्रादिरूपतामवभासयन्ती, तयैव मननत्राणात्मिकया मन्त्रशक्त्यानुग्राह्याननुगृह्य-भोगमोक्षैकभाजनतया तत्तद्भुवनैश्वर्यादिभोगवितरणपूर्वं मुक्त्या परसंवित्तत्वलक्षणपरब्रह्मैकात्म्यत्मना संयोजयति। इति—तत्तदवसरे प्रदर्शयिष्यते। मन्त्रस्फुरत्ताक्रमश्च यथा—"पराभगवती शक्तिर्हि स्वस्वातन्त्र्याद्विश्वमवबिभासयिषुः प्रथमं 'प्राक्संवित्प्राणे परिणता" इत्युक्त्या प्राणाद्यस्फुरत्तामयों प्राणनभूमिकामवलम्ब्य वाच्यवाचकात्मषड-ध्वात्मकशब्दार्थप्रपञ्चगर्भमहानादभट्टारकस्फारणक्रमेण पश्यन्ती मध्यमा

वैखरीवाग्रूपतया स्वात्मचमत्कारमयी विजृम्भते। तत्र पश्यन्त्यामस्फुट-विभागत्वाद्वाच्यवाचकयोः क्रमानुल्लास एव, तस्या द्रष्ट्रेकस्वभावत्वात्। मध्यमायां पुनस्तयोः स्फुटास्फुटत्वेन क्रमोदयः। वैखर्यां तु स्थानकरणप्रयत्नाश्रयव्यक्ततत्तद्वर्णक्रमोपग्रहः स्फुट इति सर्वत्रैव महामन्त्रपरामर्शचमत्कारकारित्वेन विश्वभेदावभासप्रपञ्चकवलनस्वभावा वैखरीभूमावपि त्र्यक्षर्यात्मकुलसुन्दरी प्रधानमन्त्रात्मना स्वाभिन्नकरणेन स्वेच्छासंकोचावभासितमितप्रमातृभावभावमपसार्याशेषविश्वभावखचितपूर्णविश्वाहम्भावधाराधिरूढिं स्वोपासकजनान्नयतीत्याशयतः स्तुतिकृत् स्वयं कृतकृत्यतया लब्धपरदेवतात्मभावतद्विभूतिमहाहर्षमहोल्लाससरसनिर्भरतया स्वयं कृतार्थतामाश्रयमाणः परोपकारप्रावण्येनैव श्रीपरदेवतास्तुतिमाशीर्वादात्मानुग्रहस्फारपुरःसरां मन्त्रतद्देवतास्वरूपोपक्षेपिणीमुपक्रमते। तत्र श्रीमहात्रिपुरसुन्दर्या विद्याधिष्ठातृदेवतास्तदुपासनस्थानफलानि च सामान्यतः स्तुत्यपदेशेनोपदिशति—

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहःस्थिता
छिन्द्याद्वः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥१॥

एषासौ भातभासमानानुसन्धानैक्येन प्रत्यभिज्ञायमाना त्रिपुरा, तिस्र इच्छादयः परापरादिरूपाः शक्तयः पुरः शरीराणि यस्याः सा तद्रूपा। तदुक्तं श्रीमालिनीविजये—

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते॥

एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम्।
ज्ञापयन्ती [1]झगित्यन्तर्ज्ञानशक्तिर्निगद्यते। (३अ० ५. ६. ७)

1. जगत्यत्र (का०)

एवं भूतमिदं वस्तु भवत्विति यदा पुनः ॥ (७. १४)
ज्ञाता तदैव तद्वस्तु कुर्वत्यत्र क्रियोच्यते ॥' (८.१५) इति ।

'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'— इति श्रुतेः (श्वेता० ६. ८) । अत्र 'बलमिच्छेति'ज्ञेयम् । यद्वा त्रिभ्यो वेदितृवित्तिवेद्यरूपेभ्यः पूर्यतेऽग्रे गम्यते ज्ञायते तदाधारस्वरूपत्वेनेति त्रिपुरा शान्तात्मिका । तदुक्तम्—

'त्रिपुटीमयं समस्तं तदपि ज्ञेये ज्ञातरि च समम् ।
दृढग्रन्थिर्ज्ञानकला कलयति त्रैलोक्यमेककलम् ॥'

इत्येवमिच्छादिशक्तिसमष्टिशान्ताशक्तिरूपा ब्रह्माभिन्नाद्या शक्तिः श्रीत्रिपुराशब्दनिर्वचनीया, सैव सिसृक्षादिस्वरूपोद्भावनोत्तरं तत्तच्छक्त्याविष्टशक्तिमद्रूपावलम्बनेन विश्वसर्जनादिकृत्यसम्पादनं विदधती यावत्प्रत्यक्षग्राह्यसंकुचितप्रमातृभावपदमपि व्यश्नुवाना तथा तथा व्यपदेशभाक् समस्तैर्जनैरनुभूयते इत्याशयेनैषेत्यपरोक्षनिर्देशवाचिनैतदा परामृष्टा । सैव पुनः प्रोल्लासितत्रिपुटीरूपविविधविश्वप्रपञ्चोदयविश्रान्तिस्थानत्वेन समाधिसुषुप्त्यादौ सच्चिदानन्दघनस्वरूपपरिशेषवास्तवैकीभावा प्रत्यभिज्ञायमाना स्वेच्छाकल्पितदेशकालावभासव्यवहितेव तत्पदवाच्यभावानुगुण्येनादसा परामृष्टा, इत्यनेन सामानाधिकरण्येन तत्त्वतोऽभेदान्वयपर्यवसायिनीयं स्तुतिरिति स्तोत्रकार आद्यश्लोक एक स्वसंविन्मयपरदेवतास्वरूपपरामर्शनस्य परमोत्कृष्टफलं भङ्ग्या सूचितवान् । एवं विश्वोदयस्थितिविलयदशासु काचित्तुरीया स्वसंविद्रूपा विनष्टत्वभावा देवी समस्त्येव, इत्येवंविधाशयेनैव श्रीवामकेश्वरे—"त्रिपुरा परमा शक्तिराद्या ज्ञानादितः[1] प्रिये" इत्युपक्रम्य—

'एषा सा परमा शक्तिरेकैव परमेश्वरी ।

---

1. जातादितः (का०)

त्रिपुरा त्रिविधा देवी ब्रह्मविष्णवीशरूपिणी ॥
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ।
त्रैलोक्यं संसृजत्येषा त्रिपुरा परिकीर्त्यते ॥ इति ।'

मध्येऽप्यस्य—

'रमते स्वयमव्यक्ता त्रिपुराख्यातिमागता' (४प ४–१६) इत्यन्तं त्रिपुरापदनिरुक्तिप्रकारमर्थतत्त्वं परमेश्वरो निरवोचत् ।

वाराहीयेऽपि—

'ब्रह्मविष्णुमहेशाद्यैस्त्रिदशैर्रचिता पुरा ।
त्रिपुरेति तदा नाम कथितं दैवतैरतव ॥ इति ।'

यद्यपि त्रिपुराशब्दस्यागमेषु त्रिभ्यो गुणबीजपीठलोकादिभ्यः पुरा भूतत्वात् इत्यादिबहुधात्वेन व्याख्यातं, तथापि तथा तथा व्याख्यानानामेकत्रैव प्रदर्शनेनादित एव ग्रन्थविस्तरः स्यात् । तस्माद्विनेय जनहृदयोद्वेगदायित्वात्ततो विरम्यते, यथाप्रदेशमग्रे व्याख्यान्तराणि प्रदर्शयिष्यन्ते । त्रिपुरार्णवे तु—

'नाडित्रयं तु त्रिपुरा सुषुम्ना पिङ्गला इडा ।
मनो बुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम् ।
तत्र तत्र वसत्येषा तस्मात्तु त्रिपुरा मता ॥' इति ।

वः, स्वविद्याजपादिपराणां भक्तानां युष्माकमघ पापमाणवमायीयकार्ममलस्वरूपं भवबन्धनिबन्धनत्वात्सदा सर्वदा सहसाविलम्बमतर्कितोपनततीव्रतमशक्तिपातवशादनुपसेव्यमानोपायजालनियन्त्रणतन्त्रबन्धनं यथा स्यात्तथा छिन्द्यादुपसंहरेत् । दुष्कृतनिकरोच्छेदेनानुग्रहाभिमुखी भूयादित्याशंसायां लिङ । एतेनानुपायाख्यक्रमसोपानपदबन्धात्मा परमार्थनीयकाष्टाशंसाविष्कृता भवति । तत्र "ज्ञानं बन्धः" । (१. २) (३. २) 'योनिवर्गः कलाशरीरमिति' (१. ३) इति श्रीशिवसूत्रोक्तनीत्या परिपूर्णप्रकाशानन्दघनसतत्त्वसंवित्तत्त्वस्यान्यतमां-

शापरामर्शनिबन्धनापूर्णमन्यतात्मकमाणवमलं, तत एव विभिन्नवेद्य-जातावभासनं मायीयाख्यं, शुभाशुभकर्मवासनात्मकं कार्ममिति त्रि-धागमेषु लक्षितम्। तदुक्तमाचार्योत्पलदेवपादैः—

'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः॥

भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम्।
कर्तर्यबोधे कार्मं न मायाशक्त्यैव तत् त्रयम् ॥ इति।'

(ई. प्र. ३.अ०२.आ०४.५)

एवं मलविधूननस्वभावत्वमेव परमार्थतत्त्वस्याम्नायप्रसिद्धं निर्मलं स्वं चिन्मयस्वभावं ध्वनयतीति भावार्थोऽत्रावगम्यः। यथा 'इषीका-तूलमग्नौ प्रोतं प्रदूयेतैवमेवास्य पाप्मानः प्रदूयन्ते' इति श्रुतेः। तथा—

'विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपनैत्यकम्।
सदापि पापकर्माणमेनो न प्रतियुज्यते॥
जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम्।
न संवसन्ति पापानि ये च स्नाताः शिरोव्रतैः॥'

इति वसिष्ठस्मृतेः। तथा—पाद्मे पुष्करखण्डे—

'मेरुपर्वतमात्रोऽपि राशिः पापस्य कर्मणः।
कात्यायनीं समासाद्य नश्यति क्षणमात्रतः॥
दुर्गार्चनरतो नित्यं महापातकसम्भवैः।
दोषैर्न लिप्यते धीरः पद्मपत्रमिवाम्भसा॥ इति'

देवीभागवतेऽपि—

'छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत्।
प्रणम्य शिरसा देवीं न स पापैर्विलिप्यते॥
सर्वावस्थांगतो वापि युक्तो वा सर्वपातकैः।
दुर्गां दृष्ट्वा नरः पूतः प्रयाति परमं पदम्॥ इत्यादि'

ब्रह्माण्डपुराणे—

'वर्णाश्रमविहीनानां पापिष्ठानां नृणामपि ।
यद्रूपध्यानमात्रेण दुष्कृतं सुकृतायते ॥' इति ।

अत्र स्वात्मविषयाशंसां परिहृत्य 'वः' इत्युक्तिभङ्ग्या परानुग्रहैकविषयकप्रयोजनप्रवणतां (शेषवृत्तिरूपां) श्रीमांस्तोत्रकारो धर्माचार्यः स्वस्मिन्नाविष्कुर्वन् समधिगताशेषकामतयापि कृतकृत्यत्वाद्विगलितसमस्तलौकिकालौकिकविकल्पकलङ्कविभ्रमतां सूचयति । यदुक्तमभिनव गुप्तपादैः—

'समस्तयन्त्रणातन्त्रत्रोटनाटङ्कधर्मिणः ।
नानुग्रहात्परं किञ्चिच्छेषवृत्तौ प्रयोजनम् ॥'

'स्वं कर्तव्यं किमपि कलयंल्लोक एष प्रयत्ना—
न्नो पारार्थ्यं प्रति घटयते कांचन स्वात्मवृत्तिम् ।
यस्तु ध्वस्ताखिलभवमलो भैरवीभावपूर्णः
कृत्यं तस्य स्फुटमिदमियल्लोककर्तव्यमात्रम् ॥' इति ।

स्मृतं च—

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥' (भ. गी. ३. १७)
इति । 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥' (भ. गी. ३. २२)
इति च

'अघं छिन्द्यात्' इत्यनेन पापाभाव एव धर्माभिवृद्धिरित्यघच्छेदोपलक्षितानां धर्मादिचतुर्वर्गाणामपि साधनत्वं श्रीत्रिपुराविद्यायाः सूच्यते । तदुक्तं प्रपञ्चसारे—

'वागैश्वर्यातिशयदतया वाग्भवं बीजमुक्तं
त्रैलोक्यक्षो[1]भणादिपुनरपिवशताकृष्टिदं कामराजम् ।

1. क्षोभणसबशताकृष्टिदम् (आर्थरएवेलानसम्पादिते)

शाक्तं क्ष्वेडा[1]पहरणकविताकारकं बीजमेतत्—
प्रोक्तं धर्मद्रविणसुखमोक्षप्रदं साधकानाम् ॥' (९ प. ४)

इति ।

कीदृशी, त्रिभिः पदैः समनन्तरोक्तपादत्रयपरामृश्यमानैर्ललाटादिस्थानैरुपलक्ष्यमाणा, तेषु तेषु स्थानेषु सदुपासकजनैरुपलक्षणभूतेषु विभाव्यमानेत्यर्थः । इत्थंभूतलक्षणा तृतीया । अतस्त्रीणि पुराणि हृदादीनि स्वप्रकाशसंविद्घनस्वरूपोपलक्षणानि यस्या सा—इत्यपि त्रिपुरापदनिरुक्तिप्रकारमभ्यधात् । एतेन—

'हृद्याकाशे निलीनाक्षः पद्मसंपुटमध्यगः ।
अनन्यचेताः सुभगे ! परं सौभाग्यमाप्नुयात् ॥' इति
'हृदये चित्तसंघट्टाद् दृश्यस्वापप्रदर्शनम् ।'

इत्याद्युक्तोपायवर्गमप्यनुजग्राहेति बोध्यम् । अथ च त्रिभिःपदैरुक्तनिबन्धसन्दर्भोपक्षिप्यमाणविद्याकूटाक्षरात्मकैर्वोपलक्षिता श्रीविद्यारूपेत्यर्थः । तेन त्रिभ्यो ब्रह्माद्यधिष्ठितज्ञानादिशक्तयात्मकवाक्कामशक्तिबीजेभ्यः पुराभूतत्वात् त्रिपुरा तत्समष्टिस्वरूपेत्यपि निर्वचनान्तरं स्वाभिमतचित्रमुपक्षिपति ।

ननु, एवंविधायाः श्रीत्रिपुराभिधायाः परदेवतायाः किं स्वरूपमित्याशंकायां तस्या असाधारणस्वरूपलक्षणमाह—'ज्योतिर्मयी' इत्यादि परिमितार्कादिप्रकाशादिवैलक्षण्येन तज्जीवितायमानत्वादशेषावभासनास्तमितपरतेजोरूपा

'तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदंविभाति ।'

'एतस्मिन् खलु रे गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ।'

इति च श्रुतेः,

---

1. क्ष्वेला (तत्रैव)

'न तद्भासयते सूर्यो न शशांको न पावकः ।'

इत्यादिस्मृतेश्च । एतदर्थं चाचार्याभिनवगुप्तपादा व्यवृण्वन् यथा—

'यत्र सूर्यो न वा सोमो नाग्निर्भासयतेऽपि च
न चार्कसोमवह्नीनां तत्प्रकाशाद्विना महः ।
किमप्यस्ति निजं किन्तु संविदित्थं प्रकाशते ।'

इति । एतेन स्वप्रकाशत्वेन तत्र प्रत्यक्षादिप्रमाणानां व्यापाराभावे ज्ञापकादिसिद्ध्यनुपयोग इति प्रादर्शि । न च मयटो विकारावयवार्थयोर्विधीयमानत्वादत्र च परिणामाद्यापत्तिः स्यादिति वाच्यम् । "नित्यं वृद्धशरावादिभ्यः" इत्यत्र 'नित्यं' इति योगविभागात्तद्रूप्ये मयटो विहितत्वादिति समाधेयम् । तस्य परतेजसो विश्वनिर्भरत्वेनापेक्षणीयपूर्णाहम्परामर्शैरेव स्वभावत्वमकृत्रिममस्त्येव । अन्यथा विमर्शवैधुर्ये स्फटिकाकारप्रकाशमात्रवाग्भवबीजेनोपास्येति । तदुक्तं सौभाग्यहृदये—

'योनौ कनकपुञ्जाभं हृदि विद्युच्छटोपमम् ।
आज्ञायां चन्द्रसंकाशं महस्तव महेश्वरि ॥'

एवमेकैकमग्निसूर्यचन्द्रकुण्डलिन्याख्यया श्रीत्रिपुरा ज्ञेया, तत्तेजःसमष्टिरूपत्वात् । एवमुक्तक्रमेण विद्याबीजस्थानान्यवगम्यानि । न तु प्रोक्तपादैरुपक्षिप्यमाणबीजानां प्रातिस्विकप्रतिपदोक्तस्थानसादृश्येनेति । अग्रेऽपि द्वितीयस्तवे वक्ष्यते—मूर्ध्नि स्फुरत्तुहिनदीधितिरित्यत्र । एवं सन्दर्भरचनासूचितानामेषां वाग्भवकामराजशक्तिबीजानां धर्मकामसमोक्षफलप्रदत्वं श्रीत्रिपुरया सहाभेदत्वं चागमप्रसिद्धम् ।

तदुक्तं श्रीवामकेश्वरीमते—

'वागीश्वरी ज्ञानशक्तिर्वाग्भवे मोक्षरूपिणी ।
कामराजे कामकला कामरूपाक्रियात्मिका ॥

शक्तिबीजे पराशक्तिरिच्छैव शिवरूपिणी ।
एवं देवी त्र्यक्षरी तु महात्रिपुरसुन्दरी ॥'

(४प १७. १८) इति ।

तत्राद्यबीजं त्रय्याद्याक्षरनिष्पन्नत्वात् त्रयीमयतां नोज्झति । यथा सामऋग्वेदाद्यभूतयोर्विश्लिष्यस्थापितयोर्वर्णयोः परतःस्थापितेन यजुराद्यवर्णेन क्रमेण गुणवृद्धिसन्धौ विधीयमाने कुलसुन्दरीविद्याद्यबीजंनिष्पद्यते ।

तदुक्तं कादिमते—

'त्रयीमयत्वं विद्यायास्तथा व्यञ्जनसङ्क्रमात् ।
वाच्यवाचकरूपस्य प्रपञ्चस्यामितात्मनः ॥
कारणत्वं परात्मत्वममेयत्वञ्च वै क्रमात् ।
कथयामि शृणु प्राज्ञे ! विचित्रा मन्त्रवैभवाः ॥'

इत्युपक्रम्य 'इत्युत्पन्नं शुचेर्वपुः' इत्यन्तम् । एतत् तृतीये स्तवे स्पष्टं निरूपयिष्यते । द्वितीयन्तु—विशिष्टसन्दर्भरूपेण त्रयीमयतामत्यजदशेषशब्दार्थरूपप्रपञ्चव्याप्तिमावेदयति, यथा विद्याया द्वितीयबीजगतककारलकारयोर्मध्ये ककारस्य व्यञ्जनात्ममातृकादिभूतत्वात् लकारस्य च पञ्चभूतादिभूतपृथिव्यक्षरात्मकत्वात् वाच्यवाचकात्मप्रपञ्चोपलक्षणत्वेन तयोर्बिन्दुविसर्जनीयैक्यरूपशिवशक्तिसामरस्यात्मकतुरीयस्वरविश्रान्त्या विश्वाभेदव्याप्तिर्निरूप्यते ।

तदुक्तं तत्रैव—

'मध्यमार्णगतप्राणा व्यञ्जनादेस्तुमातृका ।
प्राग्वत् कारणकार्यत्वयोगाद्वाचकरूपकम् ॥
तदर्णकरसायोगा भूतादित्वेनवाच्यता ।
इति वाचकवाच्यत्वरूपा विश्वात्मतोदिता ॥'

इति । तृतोयबीजे तु व्यञ्जनस्य ज्ञेयरूपत्वादचो ज्ञानरूपत्वाद् विसर्जनोयस्य ज्ञातृस्वरूपत्वाच्च ज्ञातृज्ञानज्ञेयरूपत्रिकात्मकविश्वमयत्व-

व्याप्तिःसुव्यक्तं प्रतिपादितः। तदुक्तं तत्रैव—

'परारूपं तृतीयेन त्रिशिकोक्तं त्रिधात्मकम्।
एवमेषा विश्वमयी'।

इति। अस्य तृतीयस्य हृदयबीजस्यत्रिकागमोक्तप्रक्रिययाऽर्थोऽग्रेयथावसरं व्याख्यास्यते।

एवमस्याविद्यायास्त्रिभिर्वाग्भवादिखण्डैस्त्रिधाशेषविश्वात्मकत्वात् साधकस्य 'नासाध्यं किञ्चिदस्तीति' इति न्यरूपि।

मन्त्रोद्धारज्ञानप्रकारस्तु श्रीमहात्रिपुरसुन्दर्युपासनाशेषभूतत्वादस्मादाद्यपद्याद् ग्रन्थकृता नैपुण्येन समुन्मील्यमानः प्रदर्श्यते—तत्र प्रथमपादे आद्यार्णतया, द्वितीयपादे द्वितीयार्णतया, तृतीयपादे तृतीयार्णतयेति—, अनुक्रमशः श्रीबालासुन्दरीविद्याबीजानि समुद्धृतानि। 'सर्वतः' इत्यत्र समुद्धृतस्य विसर्गस्यानुकर्षणात् तृतीयं बीजं सम्पूर्यम्, इतीमं मन्त्रोद्धारसूचनाक्रमं स्वयमेव ग्रन्थकृत् स्पष्टं परसम्प्रतिपत्त्यै उपसंहारश्लोके सन्दर्भिष्यति 'यत्राद्यवृत्ते स्फुटम्। एकद्वित्रिपदक्रमेण' इत्यादिना।

तदुक्तं ज्ञानार्णवे—

'त्रिपुरा त्रिविधा देवि! बालां तु प्रथमां शृणु।
यया विज्ञातया देवि! साक्षात् सुरगुरुप्रभः[1]॥
सूर्यं स्वरंसमुच्चार्य बिन्दुनादकलात्मकम्।
स्वरान्तं पृथिवीस्थंतु[2] सुर्यस्वरसमन्वितम्॥
बिन्दुनादकलाक्रान्तं सर्गवान् भृगुरव्ययः।
शक्रस्वरसमोपेतो विद्येयं त्र्यक्षरीमता॥
गङ्गातरङ्गकल्लोल[3]वाग् गुम्फपददायिनी।
महासौभाग्यजननी महासारस्वतप्रदा॥'

(प० २, ३, ४, ५, ६)

इति। विशेषसहित इति वक्ष्यमाणतया तद्विशेषाच्च तदन्तर्भाविनोद्धताः-

---

1. गुरुर्भवेत् (मु०सं०) 2. पृथिवीयुक्तं (मु०सं०) 3. वाक्पटुत्वप्र० (मु०सं०)

सन्तीति बोध्यम् । तथाहि—समस्तत्रैपुरविद्याराशिकन्दभूतायाः परम-रहस्यसंकेतभूतायाः बिन्दुविसर्गसाहित्यासाहित्याभ्यां विशेषाश्च सूच्यन्ते । ऐ, ई, औ, । ऐं, ई, औ, । ऐं, ईं, औ । ऐं, ईं, औः । इति । तदुक्तं 'कादिमते'—

'शुचिराद्या वाक्स्वरूपा द्वितीया वह्निरीरिता ।
बिन्दुसर्गात्मनोरैक्यरूपा सात्वावयोर्वपुः ॥
तेन बीजेन विश्वात्मरूपा सा सम्यगीरिता ।
वनं तृतीयमाख्यातं मायया स्वेन वा युतम् ॥
एषा त्रि[1]पुरकन्दा स्यात् संकेतेति निगद्यते ।
ज्ञातृज्ञानज्ञयदोषगुणतेजस्त्रयात्मिका ॥' (प० १५. ४२-४४)

इति । 'सर्वतोऽहस्थिता' इत्यनेन सर्वेषु बीजेषु हकारे स्थिता इति त्रिपुरवासिनीविद्योद्धारः सूच्यते 'हैं हक्लीं ह सौः', इति तदुक्तं ज्ञानार्णवे—

'त्रिपुरेशी महेशानि ! त्रिबीजाहस्थिता यदा ।
[2]चक्रासनगता विद्धि देवि ! त्रिपुरवासिनी ॥' (१०. प० २०)

इति ।
तथा सहसा इत्यनेन हकारसकाराभ्यां सह वर्तमाना इति त्रिपुरा श्रीविद्योद्धारोपक्षेपः—हसैं हसक्लीं हसौः' ।
तदुक्तं तत्रैव—

'त्रिपुरेश[3]या महेशानि ! वाग्भवे कामराजके ।
शिवचन्द्रसमायुक्ता तार्तीये शिवरूपिणी ॥
सर्वमन्त्रासनगता त्रिपुरा श्रीरियं प्रिये ।' (१०. प० २१. २२)

इति ।
अत्रैव मध्यबीजे हकारमन्त्रयोजनायामुत्तरसिंहासनगतडामरभैरवीविद्योद्धारः—'हसैं हक्लीं हसौः' । तदुक्तं श्रीविद्यार्णवे—

---

1. त्रैपुर (मु०सं०) 2. देवि ! विद्धि त्रिपुरवासिनीम् (मु०सं०)
3. त्रिपुरेशी (मु०सं०)

'उत्तरास्येन देवेशि ! मयाद्यापि प्रजप्यते ।
महासिंहासनगता भैरवी डामरीश्वरी ॥
पूर्वोक्तभैरवीदेव्याः कामरूपे परां शिवाम् ।
हित्वोच्चरेत्तदा विद्याम्.........।'

इति । तथा 'सहसा सदाहस्थिता' इत्यनेन सदाहो दाहशक्तिमानग्नी-रेफस्तत्र स्थितेति त्रिपुराविद्योद्धारः । हसरैं, हसकलरीं हसरौं । तदुक्तं तत्रैव—

'यथा श्रीत्रिपुराबाला तथा त्रिपुरभैरवी ।
सम्पत्प्रदा नाम तस्याः शृणु निर्मलमानसे ॥
शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम् ।
कामराजं तथा देवि ! शिवचन्द्रान्वितं तथा ॥
पृथ्वीबीजान्तवह्न्याढ्यं तार्तीयं शृणु सुन्द[1]रि ! ।
कुमार्यास्त्रिपुरेशा[2]न्या हित्वा[3] सर्गं तु बैन्दवम् ॥
त्रिपुरा भैरवी देवी महासम्पत्प्रदा प्रिये ।'

(६ प० २, ३, ४, ५)

इति । तथा सहयोः स्यति पर्यवस्यति—इति कृत्वा सहसा—इत्यनेन प्रोक्तविद्याबीजेष्टाद्याक्षरयोर्विपर्यासन्यासात्कौलेशभैरवीविद्योद्धारः सं-पद्यते ह्स्रैं ह्सकलरीं ह्सरौं'—इति ।

तदुक्तं ज्ञानार्णवे—

'सम्पत्प्रदा भैरवी[4]वत् विद्धि कौलेश ! भैरवीम् ।
हसाद्या सैव देवेशि ! त्रिषु बीजेषु पार्वति ! ॥

1. वल्लभे (मु०सं०) 2. महेशानि ! (मु०सं०) 3. भित्त्वा (मु०सं०)

4. संपत्प्रदा भैरवी च विद्धि कौलेश भैरवी ।
हसराद्या भैरवी सा त्रिषु बीजेषु पार्वति ! ॥
इयं तु सहराद्या स्यात्पूजाध्यानादिकं तथा । (मु०सं०)

इयं तु सहराद्या स्यात् ध्यानपूजादिकं तथा ।'

(९ प० ५४, ५५)

इति । तथा सहसा इत्यनेन सह सकारेण द्वयोः कूटयोर्वर्तमाना सदाहस्थिता इत्यंशस्य मध्यमानत्वादितिकृत्वा दक्षिणसिंहासनाधिदेवतारक्तनेत्रा भैरवीविद्योद्ध्रियते 'सैं सकलरीं सौः' ।

तदुक्तं तत्रैव—

'चन्द्रवाग्भव संयुक्तं बीजं प्रथममीरितम् ।
सकला वह्निमायाभ्यां द्वितीयं बीजमीरितम् ॥
बालायाश्चैव तार्तीयं तृतीयं बीजमीरितम् ।'

इति । तथा सर्वतः सहसा सदाहस्थिता क्लीं कान्तिमातन्वती इत्यनेन हससमुदायरेफयोर्मध्ये ककारलकाररूपिणीं कान्तिं शोभां सर्वत्र क्रोडीकुर्वाणायां पूर्वप्रदर्शितसंकेतविद्यायां विद्यान्तरोपक्षेपः 'हसकलरैं, हसकलरीं, हसकलरौः' इति । अत्रैव 'अनुष्णगोरिव शिरसि' इत्यनेन अनुष्णगोरिन्दोष्ठकारस्य शिरस्युपरिस्थे डकारे तन्निमितत्वात् सर्वतः कान्तिं दीप्तिमातन्वाना चेति कृत्वा दक्षिणसिंहासनस्थषट्कूटाभैरवीविद्योद्धारः सूचितः 'हसकलरडैं हसकलरडीं हसकलरडौः' इति ।

तदुक्तं तत्रैव—

'शिवचन्द्रौ मादनश्च भूमिर्वह्निस्तु डामरम् ।
वाक्शान्तिमनुभिर्युक्तं बीजत्रयमुदाहृतम् ॥' इति ।

तत्रैव—

डाकिनी राकिणीबीजे लाकिनी काकिनी[1]युगम् ।
साकिनी हाकिनीबीजे आकृष्य सुरसुन्दरि ! ॥

---

1. बीजे आहृत्य देवेशि ! योजयेच्चन्द्रसूर्ययोः । (मु०सं०)

आद्यमैकारसंयुक्तमन्यदीकारसंयुतम् ।
शक्रस्व[1]रान्वितं देवि ! तार्तीयं बीजमालिखेत् ॥
बिन्दुनादकलाक्रान्तं द्वितीयं[2] शैलसम्भवे ।'

इति । तृतीयं तु सविसर्गमिति तन्त्रान्तरोक्तम् ।
तद्यथा—

'डरौ क्ष्मामादनं वान्तं शिवमत्र त्रिधा लिखेत् ।
अर्केण मायाशक्राभ्यां क्रमात्तन्मण्डितं कुरु ॥
बिन्दुनादान्वितं चाद्ययुग्ममन्त्यं विसर्गवत् ।'

इति । इयं षट्कूटा—

'एतस्या एव विद्यायाः षड् वर्णान् क्रमतः स्थितान् ।
विपरीतान् वदेत् प्रौढे ! विद्येयं भोगमोक्षदा ॥
नित्याख्या भैरवी देवी...........।'

इति । तथा सहसा इत्यनेनैव सहसेन सकारेण वर्तमानेति कृत्वा सादयश्च विद्याःकाश्चिन्निष्पद्यन्ते 'सहैं सहक्लीं सहौः' इति । 'सह्लैं सहकलरीं सह्लौः' इति । 'सहकलरैं सहकलरीं सहकलरौः' इति । सहकलरडैं, इत्यादिच ।

तथा सदा अहस्थिता शिरस्यनुष्णगोः सर्वतः कान्तिं दधती इत्यनेन आकारहकारयोरुपरि बिन्दुमात्रनिमित्ततया सर्वत्र अनुत्तरविमर्शमयशिवशक्तिभ्यां ताभ्यां प्रत्याहारन्यायेन समुपसंहृतस्याशेष वाच्यवाचकात्मकषडध्वस्फारमयस्य 'अकुलस्वरूपाद्' व्योमकलापर्यन्तस्य विश्वस्याविभागवेदनात्मकबिन्दुविश्रान्त्या अकृतकविमर्शमयाहन्तासारानिखिलमन्त्रोदयविलयस्थानं महामन्त्रवीर्यभूमिरुपक्षिप्ता भवति । यया सर्वे मन्त्रा विद्याश्च गृहीतवीर्याः साधकजनैर्यथाकामं प्रयोज्यमानाः अर्थक्रियां निष्पादयितुं प्रभवेयुः । तदुक्तं श्रीशिवसूत्रेषु—

---

1. शक्रस्वर समायुक्तं (मु०सं) 2. तृतीयं (मु०सं०)

'महाह्लदानुसन्धानान्मन्त्रवीर्यानुभवः' इति। (प्र० १ उ० २२)

श्रीस्पन्देऽपि

'तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः
प्रवर्तन्तेऽधिकाराय करणानीव देहिनः।'

इत्यादि। तथा—

मूलविद्यान्त्यबीजे षट्त्रिंशतां तत्वानां व्याप्तिसम्भवात्तदन्तर्भावोऽपि यथा स्यादिति प्रतीतेरनुगतत्वेन पृथिव्यादिमायापर्यन्तानामेकत्रिंशत्तत्त्वानामनुत्तरत्रिकागमोक्तप्रक्रियया सकारेण शुद्धविद्यादिशक्त्यन्तानां शूलार्णेन तदतीतस्य विसर्गेण व्याप्तिर्निरूपिता।

शिवादिशुद्धविद्यान्ततत्त्वपञ्चकस्य चिदानन्देच्छाज्ञानक्रियाशक्तिसारत्वात् पञ्चशक्तिरूपत्वञ्चेति एतत्सर्वं तत्रैव परस्यां भूमौ विलीयते तत एव चोदेति इति प्रदर्शितं भवति।

तदुक्तं श्रीपरात्रीशिकायाम्—

'सार्णे[1]नाण्डत्रयं व्याप्तं त्रिशूलेन चतुर्थकम्।
सर्वातीतं विसर्गेण पराया व्याप्तिरिष्यते॥'

तथा—'यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः।
तथा हृदयबीजस्थं विश्व[2]मेतच्चराचरम्॥' (२४) इति।

'न विद्या मातृकापरा' इत्युक्तेर्मातृकाया अप्यस्यां विद्यायामन्तर्भावः। तथाहि प्रथमान्त्यबीजयोः सर्वेऽचो गृह्यन्ते, तत्राकारेकारो-

---

1. मुद्रित परात्रीशिकायां पद्यमिदं नोपलभ्यते; मालिनीविजयोत्तरतन्त्रस्य चतुर्थाधिकारे तु २५ श्लोकस्यायं पाठभेदः—

सार्णेन त्रितयं व्याप्तं त्रिशूलेन चतुर्थकम्।
सर्वातीतं विसर्गेण परा व्याप्तिरुदाहृता॥

2. जगदेतच्चराचरम्—इत्यपि

काराणां क्रमेण गुणवृद्धिसन्धौ दशस्वराः सबिन्दुविसर्गा अन्तर्भवन्ति। चत्वारः षण्ठस्वरा लकारस्यैव रूपभेदाः। विलोमोच्चारक्रमे विसर्गो हकारो मध्यबीजे लकारश्च ताभ्यां प्रत्याहारन्यायेन संगृहीताः पाणिनीयपरिभाषिता हलोऽन्तर्भवन्ति। सकारककाराभ्यां क्षकारश्चेति मातृकोद्धारः। तदाश्रया लौकिकालौकिकाशेषवाङ्मयभाषागीतिस्तुतिभदाश्च तदन्तर्भूताः सूच्यन्ते। केचिदन्त्यबीजे सप्तविभक्तयोऽप्यन्तर्भवन्तीत्याहुः। तथा च तत्र 'सु–औ–जस्' इति प्रथमाविभक्तिरूपमुपलभ्यते, सा च प्रातिपदिकमात्रनिष्ठेति, द्वितीयादीनां विभक्तीनां तदन्तर्भावात् कर्मादिकारकविशेषतयापि तस्या एवावस्थितत्वात्। एवमुक्तकुलसुन्दरीभेदाः श्रीतन्त्रराजे पञ्चदशे पटले संज्ञान्तरैर्निरूपिताः—

'विद्यायाः कुलसुन्दर्या हंसयोगात् त्रिषु क्रमात्।
विजयाख्या महाविद्या विश्वसंत्राणतत्परा॥
हृत्समायोगतस्तेषु जीवाख्या विश्वचिन्मयी।
द्वयोर्नियोजनात्तेषु जायते आवयोर्वपुः॥
हृदादिस्त्वन्मयी विद्या हंसादिर्मन्मयो मनुः।
तेषु दाहसमायोगाद्विश्वाख्या विश्वविग्रहा॥
प्रत्येकं शक्तिपुटिता विद्या विश्वविमोहिनी।' (५०.५१.५२.५३)

इत्यादि,

तथा सूचितसंकेतविद्यायास्त्रिषु खण्डेषु द्वितीयतृतीयविधुरं प्रथमे वा, प्रथमतृतीयविकलं द्वितीये वा, प्रथमद्वितीयहीनं तृतीये वा, तेष्वन्यतमविधुरमितरयोर्वा समस्तेषु कादिक्षान्तवर्णानां पञ्चत्रिंशत्संख्याकानां व्यञ्जनानां क्रमव्युत्क्रमापक्रमे एकद्वयादिक्रमेण समायोगान्निष्पद्यमानानां विद्यानामसंख्यातरूपत्वं संजायते तदुक्तं तत्र—

एकद्वयादिसमायोगाद्व्यञ्जनानां तथा त्रिषु।
ज्ञातुं न शक्यते संख्या विद्यानां परमेश्वरि॥
एवं सानन्तविभवा तां निःशेषं वदे[1]त्कथम्। (१५. प०४७. ४८)

1. तान्यशेषं ब्रुवे कथमिति मुद्रित संस्करणम्

इत्यलं प्रसक्तानुप्रसङ्गेन ॥१॥

अथ विशेषोपासनोपदिदिक्षया नादबिन्दुमयानच्ककलात्मना समुपास्यमानस्याद्यबीजांशस्य मोक्षफलत्वमाह—

या मात्रा त्रपुसीलतातनुलसत्तन्तूत्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा
ज्ञात्वेथं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥२॥

वरदे ! इत्युत्तरश्लोकादिह प्रत्यनुवर्तनीयमन्यथा तवेत्याभिमुख्यनिर्देशवाचिना व्याहारप्रकारस्याघटनात् ।

'तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः' इत्युक्त्या यमनियमाद्यनुष्ठानपूर्वं व्रियन्ते इति वरास्तान् स्वोपासकेभ्यो विष्णुविरिञ्च्यादिभ्यो दत्ते इति वरदा । तदाह पद्मे नारदः—

'यच्चाहमुक्तवानस्या उत्तानकरतां सदा ।
उत्तानो वरदः पाणिरेष देव्याः सदैव हि ॥
सुरासुरमुनिव्रातवरदेयं भविष्यति ।'

इत्येतेनात्र दानक्रियायाः प्रायेण हस्तकरणकत्वाद्वरद पाणिरित्यर्थो ज्ञेयः । वस्तुतोऽत्र सुरासुराद्यभीप्सितकामनासंपूरणमात्रे तात्पर्यात् । वरमुद्राधारणार्थपरत्वस्य तु सुयोग्यत्वानुपपत्तेः । भगवदाचार्याणाम्—

'त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः
त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।' इत्युक्तेः ।

वरं वरणीयं परमशिवधाम स्वोपासनया मुमुक्षुभ्यो दत्ते इति वा, शक्तेः शिवाभेदात्मतया तदुपासनयैव शक्तिमत्स्वरूपाधिगमः । तदुक्तम्—

न वह्नेर्दाहिकाशक्तिर्व्यतिरिक्ता विभाव्यते ।

केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने ॥
यथा लोकेन दीपस्य किरणैर्भास्करस्य वा ।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवप्रिये ॥ (वि० भै० २१)

इति । तथा—

शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना ।
तदासौ शिवरूपी स्याच्छैवीमुखमिहोच्यते ॥ (वि० भै० ५१)

इत्येतदग्रे यथावसरं निर्णेष्यते । तव वाङमयत्वेन त्वत्सम्बन्धिनि प्रथमे वाग्बीजे श्रीकुलसुन्दरीविद्याद्याक्षरस्वरूपे वाग्भवाख्ये कूटे 'मूलाधारे वाग्भवाख्यं कूटं संचिन्तयेद्बुधः' ।
इत्युक्तनीत्या—

'आधारपंकजं पीतं चतुष्पत्रं सुकेसरम् ।
अधोमुखं च तन्मध्ये कुण्डलीपरमेश्वरी' ॥

इति स्वच्छन्दसंग्रहोक्त्या च चतुष्पत्राधारपद्मकर्णिकोपास्यस्थानकत्वात् तदब्जयोन्यात्मशृङ्गाटाकृतिमिति स्थिता या मात्रा नादबिन्द्वात्मानच्ककला कुण्डलिनीशक्तिरिति जीवशक्तिरूपा गर्भीकृताशेषवाच्यवाचकात्मविश्वरूपत्वेन प्रसुप्तभुजगवत्कुण्डलाकारा, नादामर्शतां निमज्ज्य प्राणात्मकं रूपमाविश्यास्थिता । तथा च पारमेशी बोधाख्या शक्तिर्विश्वं गर्भीकृत्य पराकुण्डलिका सती विमर्शरूपतया नादात्मवर्णकुण्डलिकात्मना स्फुरित्वान्तर्निमज्जितैतत्स्वरूपा प्राणकुण्डलिकात्मतयाभातीत्याम्नायः ।
तदुक्तं कादिमतेऽपि—

मूलाधारस्थवह्न्यात्मतेजोमध्ये व्यवस्थिता ।
जीवशक्तिः कुण्डलाख्या प्राणा[1]काराथ तैजसी ॥
प्रसुप्तभुजगाकारा त्रिरावर्ता महाद्युतिः ।
मायाशीर्षा नदन्तीं तामुच्चरत्यनिशं खगे ॥

---

1. प्राणाकारेण तेन सा (मु०सं०)

सुषुम्नामध्यदेशेकर्णं या दसाद्वयस्य तु ।
पिधाय न शृणो[1]त्येनं ध्वनिं तस्य तदा मृतिः ।।

इत्यादि ।

कीदृशी कुण्डलिनी, त्रपुसीलता कर्कटीवल्ली तस्यास्तनुः सूक्ष्मश्चासौ लसन्नधिरोहन्नङ्कुरतयोद्गच्छन् यस्तन्तुर्गुणस्तस्योत्थितिमुदयं स्पर्धते अनुकरोतीति स्पर्धिनी तद्वत्तनीयसीत्यर्थः । तदुक्तं ब्रह्माण्डे—

'महाशक्तिः कुण्डलिनी बिसतन्तुतनीयसी' ।

इति । श्रुतिरपि—

'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।

इति । विज्ञानभैरवे—

आमूलात्किरणाभासां सूक्ष्मात्सूक्ष्मतरात्मिकाम् ।
चिन्तयेत्तां द्विषट्कान्ते शाम्यन्तीं भैरवोदयः ।। (श्लो० २८)

इति तनुरित्यनेन तस्या योगिमनोऽवधानमात्रविषयत्वेन न बहिर्मुखवृत्तिगोचरत्वमित्युपक्षिप्यते । तदुक्तं 'ज्ञानगर्भे'—

तवाम्ब ! परमाक्षरी भवति रूपमेतद् बहि-
र्विशत्प्रणवरूपतां समुपयाति हृत्कोटरे ।
अवेद्यमकृतात्मभिर्जननि ! बिन्दुतादात्म यत्-
विदन्ति तदहेलया त्वदनुस्मृतेर्योगिनः ।।

इति । सैव मूलाधाराब्जेऽध्युष्टवलयाकारतया प्रसुप्ता योगकलया प्रबोध्य षडब्जानि तद्ग्रन्थींश्च भिन्दानोपरियात्वा सहस्रारकमलकर्णिकाचन्द्रबिम्बादमृतं स्रावयति । तदुक्तं वामकेश्वरे—

[2]भुजङ्गाकाररूपेण मूलाधारं समाश्रिता ।
शक्तिः कुण्डलिनी नाम बिसतन्तुनिभा शुभा ।।

---

1. शृणोत्यस्या (मु०सं०) 2. मु.पु. इमेश्लोका नोपलभ्यन्ते

मूलकन्दं फणाग्रेण दंष्ट्राकमलकन्दवत् ।
मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रं समन्विता ॥
पद्मासनगता स्वच्छा गुदमाकुञ्च्य साधकः ।
वायुमूर्ध्वगतं कुर्वन् कुम्भकाविष्टमानसः ॥
वाय्वाधारवशादग्निः स्वाधिष्ठानगतो ज्वलन् ।
ज्वलनाघातपवनाघतैरुन्निद्रितोऽहिराट् ॥
ब्रह्मग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः ।
रुद्रग्रन्थिं विभिद्यैव कमलानि भिनत्ति षट् ॥
सहस्रकमले शक्तिः शिवेन सह मोदते ।
सा चावस्था परा ज्ञेया सैव निर्वृत्तिकारणम् ॥

इति ।

एवंविधां तां प्रतिजन्तु अप्राणाद्यस्फुरत्तारूपिणीं सदा सर्वदेत्यनेनास्याः स्वातन्त्र्यकालकलितत्वमित्यासूच्यते । विश्वस्य प्रमाणप्रमेयादिरूपस्य एषणीयभावजातस्य, वाच्यवाचकात्मनः षडध्वस्फारस्य वा जननव्यापारे पशन्त्यादिस्फारणक्रमेणोत्पादक्रियायां बद्ध उद्यमो यया तां बद्धोद्यमां स्वारस्येन गृहीतसंरम्भाम् । संविदो हि क्षोभकत्वात्स्वात्मोच्छलनेनाशेषज्ञेयकार्यवस्तुनो बहीरूपत्वावभासनसामर्थ्यं स्वभावसिद्धमेवेत्यनेनाभिधीयते । तदुक्तं श्रीमदभिनवगुप्तपादैः—

'क्षोभकं संविदो रूपं क्षुभ्यति क्षोभयत्यपि ।
क्षोभः स्याज्ज्ञेयधर्मत्वं क्षोभणा तद्बहिष्कृतिः ॥
अन्तःस्थ विश्वाभिन्नैकबीजांशविसिसृक्षुता ।
क्षोभोऽतदिच्छे तत्त्वेच्छाभासनं क्षोभणां विदुः ॥
यदैक्यापत्तिमासाद्य तदिच्छा कृतिनी भवेत् ।
क्षोभाधारमिमं प्राहुः श्रीसोमानन्दपुत्रकाः' ॥ (तं० ३ । ८२-८४)

इति । षडध्वात्मनां विवरणमग्रे वितनिष्यते । येयं चानुत्तरानन्दघनस्वभावकामेश्वरस्वभावाविभिन्ना परावागात्मा विश्वप्रस्फारणाहेतुः सैव बहिरुल्लिलयिषाभ्युपगमरूपत्वादिच्छाशक्तिरूपा पश्यन्ती संज्ञा ।

ज्ञानशक्तिप्राधान्याद्धीवृत्तिमात्रे प्रसार्यमाणत्वेन मध्यमेत्यध्यवसीयते। क्रियाशक्तिप्राधान्यात् पुनस्ताल्वादिकरणव्यापारजन्यस्फुरत्वे लौकिकालौकिकविचित्रशब्दात्मा वैखरीवाक् इत्यसौ वाग्विलासः सामस्त्येनेच्छादिशक्तिविकासात्मैव। तदुक्तं श्रीमदभिनवगुप्तपादैः:—

प्राक् पश्यन्त्यथ मध्यान्या वैखरी चेति ता इमाः।
परा परापरादेवी चरमा त्वपरात्मिका ॥
इच्छादिशक्तित्रितयमिदमेव निगद्यते।
एतत्प्राणित एवायं व्यवहारः प्रतायते ॥ (तं० १। २७१-२७२)

इति। तथोत्तरचतुः शत्याम्—

'इच्छाशक्तिस्तथा सेयं पश्यन्ती वपुषा स्थिता।
ज्ञानशक्तिस्तथा प्रोक्ता मध्यमा वागुदीरिता ॥
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा।

इति। इत्थमुक्तप्रकारेणाशेषजीवनशक्तिरूपत्वात् विश्वाहंभावस्फुरत्तासारां परमाकाशब्रह्मचिच्छक्तिं तां ज्ञात्वा स्वाभेदेन प्रत्यभिज्ञाय नरा ये केचन पारमेश्वरशक्तिपातपवित्रिता जनाः पुनर्भूयो जननीगर्भे मातृकुक्षिमध्येऽर्भकत्वं शिशुत्वं न स्पृशन्ति न जायन्ते इत्यर्थः।

'नातः परं वेदितव्यं हि किंचित्' इति। (श्वेता० १. १२)
'तमेव[1] विदित्वातिमृत्युमेति' इति श्रुतेः। (हंसो० ४)
ज्ञात्वा देवं सर्वपाशापहानिः' इति च। (श्वेता० १. ११)

तेषां तादृगुत्तमाधिकारिप्राप्यतथाविधोत्कृष्टपूर्णसपर्यारहस्याभिज्ञत्वात्प्रविगलितनिखिलमलमायाकर्मावरणतया वर्तमानजन्मैव पश्चिमं जन्मेति भावः। श्रुतिश्च—

'तस्य तावदेव चिरं यावद्विमोक्ष्येऽथ संपत्स्ये' इति।
(छा० उ० ६. १. ४. २)

---

1. तँ विदित्वा मृत्युमत्येति (मु०सं०)

'न स पुनरावर्तते' इति। (निरा० ३३)

स्मृतिश्च—

'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति। (भ० गी० १५-६)

अपुनरावृत्तिमुपबृंहयतः' इति।

एवमुक्तसनादबिन्दूपास्तेर्मुख्यं मुक्तिरूपं फलमुक्तम्। ते वयं तथाविधविमर्शानुसन्धानविश्वस्तहृदया मन्महेऽवबुध्यामहे प्रतिजानीमहे इत्यर्थः। स्पृशन्तीत्यनेन जननीगर्भस्पर्शमात्रनिषेधात्तद्वासो नितरां दूरापास्त इत्युक्तंभवति। त इत्यनेन भातभासमानानुसन्धानानुप्राणितेन प्रत्यभिज्ञाव्यापारेण ये पूर्वं समभ्यस्तसपर्याविभवजन्यत्वत्समावेशानन्दरसास्वादमनुभूतवन्तोऽधिगततत्फलतयावाप्तालौकिकमहिमाधिरूढिप्रख्यातकीर्तय इत्यावेदयमानेन स्वस्मिन् श्रीदेव्या भूयः प्रसादपात्रतामाविर्भावयतीति ॥२॥

एवमाद्यबीजैकदेशोपास्तिफलमुक्त्वावशेषबीजांशाक्षरफलं वाक्प्रसरसिद्धिरूपं कीर्तयन् कैमुतिकन्यायेन सम्पूर्णबीजजपोपासनामाहात्म्यमुपक्षिपति—

दृष्ट्वा सम्भ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृतं
येनाकूतवशादपीह वरदे! बिन्दुं विनाप्यक्षरम्।
तस्यापि ध्रुवमेव देवि! तरसा जाते तवानुग्रहे
वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्राम्बुजात् ॥३॥

हे वरदे! इति समनन्तरश्लोके व्याख्यातम्। येन पुंसा सामान्येन केनचिदित्युक्त्याधिकारविभागनियमाभावः श्रीविद्योपासनायामभिहितः। तरसातर्कितमेवं त्रासाद्याविष्टेनेह लोके आकस्मिकोपनतहिंस्रप्रायव्याघ्रादिजन्तुरूपं सम्भ्रमकारि भीत्याद्यावेगजनकं वस्तु किमपि द्रव्यं दृष्ट्वाकूतवशादपि भयादिनिवृत्त्यभिप्रायहेतोरपि ऐ ऐ इति बिन्दुं विनाप्यक्षरं प्रसंगेन स्खलितोच्चरितत्वादनुस्वारविहीनं विद्याद्यवर्ण-

बीजात्मकमसंपूर्णभावेन व्याहृतं भाषितं स्यात्। हे देवि! दीव्यति क्रीडतीति देवी, इयमेव क्रीडा यद्धेयोपादेयप्रयोजननिरपेक्षमेवानन्दघनतोत्कर्षेण स्वातन्त्र्यात्स्वात्माकाशे शिवादिमहीपर्यन्ताशेषजगदात्मनोल्लसनमिति। तथा दीव्यति विजिगीषते इति देवी। इयमेव विजिगीषा यत्स्वेच्छावभासिताद्विश्वस्मादुत्कर्षेण वर्तनेच्छा तथा दीव्यति व्यवहरतीति देवी, व्यवहारश्चापारमार्थिकभेदप्रथास्वभावं प्रमेयादिकं विस्फार्याहमिदं जानामीत्येवंरूपत्वेनाभिन्ने स्वात्मनि सञ्जल्पनम्। तथा देवनं द्योतनं तच्च प्रमातृप्रमेयात्मनो विश्वस्यावभासनम् तथा मन्त्रमहेश्वरादिप्रमातृवर्गस्य तत्प्रमेयजातस्यापि स्वरूपलाभवितरणात्-प्रभृति तत्परतन्त्रवृत्तिभिस्तैः प्रह्वत्वाद् दीव्यते स्तूयते इति देवी। तथा पूर्णज्ञानक्रियाशक्तिसतत्त्वतया निर्विशेषं सर्वत्र ज्ञानात्प्रसरणाच्च गतिस्तेन देव्यति जानाति प्रसरति चेति देवी। इत्यनेकधागमेषु देवीशब्दनिरुक्तिः। एतच्चाग्रे प्रतनिष्यते। हे निःशेषविश्वरक्षणादिलीलाशीले, तस्यापि 'अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः' इति न्यायेन तवानुग्रहे परशक्तिपातप्रसादलक्षणे जाते समुत्पन्ने आपतिते सति तत्पवित्रितहृदयत्वात्तरसा झगिति शक्तिपातसमनन्तरमेव नान्तरा कालविलम्बप्रत्यवायः। सूक्तयो मधुरमनोहरसुभाषितोक्तय एव सुधारसद्रव अमृतरसास्वादधारास्तान् मुञ्चन्ति स्यन्दन्तीत्येवंविधा वाचो गिरो वक्त्राम्बुजान्मुखकमलान्निर्यान्ति निःसरन्तीति ध्रुवमेव निश्चितमेवैतत्। यद्वा ध्रुवमित्युत्प्रेक्षार्थकं तेनोत्प्रेक्षामहे इत्यर्थः।

'मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः'॥

इत्यभियुक्तोक्तेः, येनेत्यनेन विद्वदविदुषोर्विषये शक्तिपातलक्षणानुग्रहस्य निर्विशेषत्वमिति ध्वन्यते। तरसेत्यनेन विद्यासिद्धिसाधनस्य फलप्राप्तौ निरपेक्षत्वमित्यभिहितम्। अपिशब्देन नियतकालजपाद्यनपे-

क्षणाद्विस्मयो द्योत्यते। यद्येतद्विन्दुहीनतायामसम्पूर्णोच्चारेऽपि सारस्वतफललाभायालं किमुत सबिन्दुकमिति। सम्भ्रमकारित्वेनात्र वीप्सा। तदुक्तं 'चतुःशत्याम्'।

'ए ओ मध्यगतं बीजं वाग्विधानाय केवलम्।
रुद्रयामलतन्त्रे तु निर्दिष्टं परमाक्षरम्'॥

इति। तथा देवीभागवते तृतीयस्कन्धे नवमेऽध्याये जनमेजयं प्रति द्वैपायनेन—

'अस्पष्टमपि यन्नाम प्रसंगेनापि भाषितम्।
ददाति वाञ्छितानर्थान् दुर्लभानपि सर्वथा॥
ऐ ऐ इति भयार्तेन दृष्ट्वा व्याघ्रादिकं वने।
बिन्दुहीनमपि प्रोक्तं वाञ्छितं प्रददाति वै॥
तत्र सत्यव्रतस्यैव दृष्टान्तो नृपसत्तम।
प्रत्यक्ष एव चास्माकं मुनीनां भावितात्मनाम्॥
ब्राह्मणानां समाजेषु तस्योदाहरणं बुधैः।
कथ्यमानं मया राजन् श्रुतं सर्वं सविस्तरम्॥
अनक्षरो महामूर्खो नाम्ना सत्यव्रतो द्विजः।
श्रुत्वाक्षरं कोलमुखात्समुच्चार्यं स्वयं ततः॥
बिन्दुहीनं प्रसङ्गेन जातोऽसौ विबुधोत्तमः।
ऐकारोच्चारणादेव तुष्टा भगवती तदा॥
चकार कविराजं तं दयार्द्रा परमेश्वरी।
त्रैलोक्ये विश्रुतश्चासीत्कविः सत्यव्रतो द्विजः'॥

इत्यादि। इत्थं विद्याद्यबीजीयमाहात्म्यं द्विधा मुक्तिसूक्तिप्रसरफलाभ्यां प्रदर्शितं भवति। अयमत्र भावः—देवतान्तराणां विधिवदाराधनासिद्धौ फलसिद्धिर्जायते। अस्यास्त्वस्पष्टाशुद्धनामोच्चारणे प्रसङ्गतोऽपि कृते धर्मादिपुरुषार्थचतुष्टयी सिद्ध्यतीति। कथं नेयं सर्वैराराध्या इति वक्ष्यमाणेन सत्यतपस आख्यानोदाहरणेन संवादयिष्यते॥३॥

एवं द्वितीयस्य कामराजबीजस्योपासनाफलं न केवलं राजादिवश्यत्वमेव, किन्तु तदेकदेशस्य प्रोक्तवाग्भवबीजवत्सरस्वतीप्रसादकारित्वमपीत्याख्यानोदाहृतिपूर्वमाह—

यन्नित्ये ! तव कामराजमपरं मन्त्राक्षरं निष्कलं
तत्सारस्वतमित्यवैति विरलः कश्चिद् बुधश्चेद्भुवि ।
आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः
प्रारम्भे प्रणवास्पदप्रणयिनीं[1] नीत्वोच्चरन्ति स्फुटम् ॥४॥

नित्यं नाम कालक्रमरहितं तथा च परा संविद्धि मातृमेयादिरूपेण प्रस्फुरन्त्यपि 'सकृद्विभातोऽयमात्मा' इत्युक्तस्थित्यावभासनक्रियाविच्छेदाभावात् कालानवच्छेदादनस्तमितस्वभावत्वमाश्रयते । न चास्याः क्रियान्तरवत् सक्रमत्वात्कालावच्छेदः संभाव्योऽलौकिकत्वात् । तदाहुः-

सक्रमत्वं च लौकिक्याः क्रियायाः कालशक्तितः ।
घटते न तु शाश्वत्याः प्राभव्याः स्यात्प्रभोरिव ॥

इति । अन्यत्रापि—

उच्छलन्त्यपि संवित्तिः कालक्रमविवर्जनात् ।
उदितैव सती पूर्णा मातृमेयादिरूपिणी ॥

इति । तेन हे नित्ये ! अकालकलितत्वादनस्तमितपरसंवित्स्वरूपे ! वस्तुतस्तु नित्यानित्यविकल्पाविषयैव चिदित्याशयेन श्रीमदुत्पलदेवपादा अपि मुक्तकेष्वाहुः—

'न तदा न सदा न चैकदेत्यपि सा यत्र न कालधीर्भवेत् ।
तदिदं भवदीयदर्शनं न च नित्यं न च कथ्यतेऽन्यथा' ॥ (उ० स्तो० १२-५)

यद्वा कामेश्वर्यादिचित्रान्तासु पञ्चदशसु तिथिनित्यासूपचरितनि-

1. प्रणयितामिति पाठान्तरम्

त्यत्वधर्मासु मध्ये तद्विलयोदयधामत्वादनस्तमितानुपचरितनित्यत्वधर्मा षोडशी श्रीमहात्रिपुरसुन्दरीसंज्ञा नित्या । यदुक्तम्—

'एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
यस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः' ॥

इति । हे नित्ये ! अकालकलितपरसंवित्स्वरूपे ! तव त्वदीयश्रीविद्यास्थं यत्कामराजं कामेषु काम्यमानेष्वर्थेषु सार्वभौमो राजेव दातुं स्वतन्त्रमनन्यापेक्षित्वात् कामराजाभिधमपरं द्वितीयं मन्त्राक्षरं श्रीविद्यापरार्णरूपं तन्निष्कलं निष्क्रान्तौ ककारलकारौ यस्मात्तन्निष्कलं तुर्यस्वरमात्रं सारस्वतं सरस्वतीप्रसादजन्यकवित्वादिसिद्धिजनकमिति चेद्यदि विरलो न सर्वो मनुष्याणां सहस्रेषु कश्चिदायाततीव्रशक्तिपातश्लाध्यो भूमाववैति विजानीयात् । प्रायः सर्वेषां सामान्येन राज्यप्रदत्ववशीकारत्वादिज्ञानवत्त्वात् । स बुधश्चतुर्दशविद्यासु वैदुष्यप्रभावप्रख्यातकीर्तिः कविः स्यात् । विरल इत्युक्तेरेतज्ज्ञानित्वस्य दुर्लभत्वम् । यद्वा यो जानाति स बुधस्तदेव तस्य ज्ञानित्वमिति । अन्यथा तदतिरिक्तज्ञानस्य लाभेऽपि असारप्रायत्वमिति सूच्यते । एतेन कामराजैकदेशस्यापि वाग्भवबीजसमानार्थकत्वमित्युक्तम् । एवं पूर्वार्धेन कामकलाया अपि सारस्वतत्वं प्रदर्श्य सत्यतपोमुनेराख्यानोपन्यासपूर्वकं तस्या वाक्प्रसादजननोपवृंहणाय हेतुद्वारेणापरार्धमाह, आख्यानमिति । यद्यस्मात्कारणात्प्रतिपर्वं प्रतिपर्वसु विषुवदाद्युत्सवाहेषु दर्शादिसन्धिकालेषु वा सत्यतपसः सत्यव्रतपर्यायस्यर्षेराख्यानमाख्यायिका व्युपलब्धसत्यार्थभूतकथा तामाख्यायिकां कीर्तयन्तः संश्रावयन्तो द्विजा इत्यनेन शुद्धविद्यापदोद्भवात्मकद्वितीयजन्मयोगित्वाद् गर्भाधानादिभिश्चत्वारिंशतासंस्कारैः संस्कृता रुद्रांशरूपा ब्राह्मणा इत्यधिकारयोग्यता सूचिता । प्रणवास्पदप्रणयिनि प्रणव ओंकार एवास्पदं प्रतिष्ठाधिष्ठानं तस्मिन् प्रणयः परिचयोऽस्यास्तीति प्रणयिनि, प्रारभ्यमाणस्य प्रणवोच्चारपूर्वकतया तत्सापेक्षत्त्वमतः प्रारम्भे तदाख्यानकीर्तनोपक्रमे ईमित्येतावन्मात्रसतत्त्वं प्रागुक्तापरबीजैकदेशस्वरूपं सारस्वतबोधफलकं प्रणवेन सह स-

मानार्थप्रयोजनकत्वात् तत्स्थानीयं स्फुटं यथा भवति तथा नीत्वा प्राप्य्योच्चरन्त्युच्चैर्गायन्ति। उपक्रमे उच्चार्यत्वेन प्रणवस्य विधानात्तत्स्थानीयं तद्बीजं कृत्वा संभूय पठन्तीत्यर्थः। तदुक्तं कालिकापुराणे—

'स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते'।

इति। दालभ्यपरिशिष्टेऽपि—

'ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च।
अनोंकृत्य कृतं सर्वं न भवेत्सिद्धिकारकम्'॥

शाटचायनः—

'दानयज्ञतपः स्वाध्यायजपध्यानसन्ध्योपासनाप्राणायाम होम दैव पितृमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेदिति'।

श्रुतिरपि—

'ओंकारेण सर्वा वाक् संतृण्णा' (छान्दो० २. २३. ३)

इति। संतृण्णा सम्पुटितेत्यर्थः।
आख्यानं यथा—

'कोसलेषु द्विजः कश्चिद्देवदत्तेति विश्रुतः।
अनपत्यश्चकारेष्टिं पुत्राय विधिपूर्वकम्॥
तस्य चोद्गातृशापानुग्रहयोः समभाविनोः।
मूर्खो भूत्वा सुतः पश्चाद्विपश्चित्कालतोऽभवत्॥
बाल्ये पितृभ्यां च जनैर्मुग्धः स निन्दितो भृशम्॥
निर्वेदात्कानने वन्यवृत्त्याह्यन्यतिवाहयन्।
सत्यं ब्रूते स्थितस्तत्र नानृतं वरदे पुनः॥
जनैः सत्यतपा नाम कृतमस्य द्विजस्य वै।
दैवेनाहं कृतो मूर्खो नान्योऽत्र कारणं मम॥
प्राप्य चैवोत्तमं जन्म वृथा जातं ममाधुना।
इत्यादि चिन्तयंस्तत्र विरक्तः कालयापनः॥

नाराधनादि विविदे न ध्यानं न च सज्जपम् ।
केवलं सत्यवादीति विश्रुतः सकले जने ।।
तत्रैकदा किरातेन विद्धे कोले मुनेः पुरः ।
विद्रुते कृपयाक्रान्तो बीजं सारस्वतं तदा ।।
अज्ञातश्रुतपूर्वं चोच्चार्य शोके ममज्ज सः ।
प्रससाद ततो ब्रह्मविद्यां तस्मै ददौ शिवा ।।
बीजोच्चारणतो देव्या विद्या प्रस्फुरिताखिला ।
वाल्मीकेश्च यथा पूर्वं तथा स ह्यभवत्कविः ।।
क्व गतः कोल इति तं पृच्छन्तं मृगयुं द्विजः ।
धार्मिकः सत्यकामस्तु श्लोकमिममुवाच सः ।।
या पश्यति न सा ब्रूते या ब्रूते सा न पश्यति ।
अहो व्याध स्वकार्यार्थिन् ! किं पृच्छसि पुनः पुनः ।।
इत्युक्तस्तेन स व्याधो निराशः सूकरे तदा ।
पूज्योऽयं नातिप्रश्नार्ह इति मत्वा ययौ गृहम् ।।
सारस्वतं सत्यव्रतो जप्त्वा लोकेऽभवच्छ्रुतः ।
पित्रा संमानितो नीतः स्वालयं वाक्पतिरिव ।।
मुनयः किल गायन्ति चाख्यानं प्रतिपर्वसु ।
यदीयमतिविस्तीर्णं यशोऽपि तदुपक्रमे ।।

इति । एवं स मुनिर्निष्कलमप्यपरं सारस्वतं जजापेति ग्रन्थकृत्सन्दर्भरचनोपन्यासरीत्या समुपक्षिप्तम् यत्तु केचित् 'ऋक्सामयोर्यजुषि सन्धिवशादुदीर्णं बीजं सरस्वति सकृत्तव ये जपन्ति । ते सत्यवाक्यमुनिवद्विदितत्रयीका आथर्वणादिकमवाप्य सुखीभवन्ति' । इत्युक्तपुरावृत्तमाद्यवाग्भवबीजमात्रपरमेवेत्याचक्षते ते तस्यागाधहृदयसिन्धोर्गूढाशयानवगाहिनः । या पश्यतीत्यस्यायमर्थः—

यदुक्तं त्वया—'वराहः केन पथागात्' । इत्ययं प्रश्नो दर्शनवदनयोरेककर्तृकत्वे सत्येवोपपद्यते । न च तथा तयोर्भिन्नकर्तृकत्वात् । तथाहि—

'अनश्नन्नन्यो अभिचाकशीति' (मुण्ड० ३,१,१) इति श्रुतिप्रतिपाद्या या सर्वसाक्षिणी चित्सा पश्यति। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (कठो० ५,१५) इति श्रुत्या सर्वप्रकाशकत्वस्य चिच्छक्तेरेव प्रतिपादनादिति न सा ब्रूते। वदनकर्तृत्वं तु बुद्धेरेव न चितिशक्तेरिति सांख्यादिमर्यादया बुद्धिर्या वदति सा न जडत्वाद्विषयं पश्यति प्रकाशयेत्।

ननु तयोश्चितिजडशक्त्योस्तादात्म्याध्यासवशाद्य एव पश्यति स एव ब्रूते इति लौकिकप्रसिद्धव्यवहारदर्शनाद्भवतोऽपि कुतो नैवं व्यवहारः, इति चेन्न। अध्यासहेत्वविद्यायामपि प्रक्षीणत्वात् सतीत्थंभावे 'अहो व्याध ! स्वकार्यार्थिन् ! पौनःपुन्येन किं पृच्छसि ? नैतत्प्रष्टुं युज्यते। इति। सत्यवचसि वराहवधपातकादन्यथासत्यवदनपापाच्च भीतिः स सरस्वतीप्रसादजन्यवाक् कौशलेन व्याधमुपरमयांचक्रे। अत्र निष्कलमित्यनेन रक्तशुक्लमिश्रबिन्दुमयदिव्याक्षरात्मिका श्रीमहाकामकला स्वान्तः क्रोडीकृतानन्तवर्णराशिमहामन्त्रवीर्यस्फारा महात्रिपुरसुन्दरीत्यतिरहस्यमुपक्षिप्तम्। यदुक्तं 'कामकलाविलासे'—

सितशोणबिन्दुयुगलं विविक्तशिवशक्तिसंकुचत्प्रसरम्।
वागर्थसृष्टिहेतुः परस्परानुप्रविष्टविस्पष्टम् ॥
बिन्दुरहंकारात्मा रविरेतन्मिथुनसमरसाकारः।
कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू ॥
इति कामकलाविद्या देवीचक्रक्रमात्मिका सेयम्।
विदिता येन स मुक्तो भवति महात्रिपुरसुन्दरीरूपः ॥ (६, ७, ८)

इति। श्रुतावपि—

'यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागोऽस्ति'। (तै० आ० १, ३, १) 'यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्'।

इत्येतदग्रे प्रकटीभविष्यति। 'प्रणवास्पदप्रणयितामिति पाठे तु यदित्युक्तबीजं सत्यतपोमुनेरुपाख्यानारम्भे प्रणवस्थानप्रतिष्ठत्वं नीत्वे-

त्यर्थः। एतेनास्य प्रणवसमानैकप्रयोजनत्वान्मोक्षैकफलत्वं मुख्यमवधार्यम्। श्रुतिश्च—

'ओमित्येव ध्यायथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुरिति' (मुण्डको० २, २, ६) ।।४।।

एवं प्रथमद्वितीयबीजैकदेशोपासनाफलं प्रदर्श्य विद्यातृतीयबीज तदेकदेशयोरपि सारस्वतफलकत्वं दर्शयति—

**यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधै-**
**स्तार्तीयीकम[1]हं नमामि मनसा त्वद्बीजमिन्दुप्रभम्।**
**अस्त्वौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये**
**गौः शब्दो गिरि वर्तते स नियतं योगं विना सिद्धिदः ।।५।।**

हे नित्ये इति सम्बोधनं, पूर्वस्मादनुवर्तनीयम्। यद्बीजं सद्यः सपदि अचिरायेत्यर्थः। वचसां सालङ्कारगुणोपेतसरससूक्तिपदगुम्फानां प्रवृत्तिकरणे निरर्गलप्रसरद्गद्यपद्यमयमनोहरवाक्यप्रबन्धनिर्माणक्रियायां बुधैर्विद्वद्भिर्दृष्टोऽनुभूतः प्रभावो वाग्जननसामर्थ्यं यस्य तत्, एतेन महाकाव्यकृतां बुधानां वैदुष्यमेतत्प्रसादमात्रोद्भवमेव। अतस्तत्र विकल्पादिशङ्कातङ्काभाव इत्यभिहितम्। बुधैरिति संपन्नवाक्प्रसरविलासत्वात् ससंवादमित्युक्तम्। तृतीयमेव तार्तीयीकं 'तीयादीकक्' त्वद्बीजं तव विद्यागतं सौरिति शक्तिबीजमिन्दुप्रभं चन्द्रमरीचिगौरं तदहं मनसा नमामि ध्यायामि इति मानसार्चाया अपि अवकाशो दर्शितः एवमग्रेऽपि ज्ञेयमत्र निखिलस्य प्रातीतिकेन चिदात्मत्वेन ब्रह्मार्पणदृष्टेर्झटित्युन्मज्जनात् इत्यवश्यकर्तव्यत्वं द्योतितम्। यत्तदोर्नित्यसम्बन्धत्वात्तदोऽध्याहारः, तार्तीयं तदिति पाठे तु नाध्याहारापेक्षित्वम्। इन्दुप्रभमिति शुक्लवर्णध्यानं वागुत्पत्तिफलानुगुणम्। यदुक्तं 'श्रीदुर्वाससा'—

---

1. 'तार्तीयं तदहं' इति पाठान्तरम

'चिन्तयतां सितवर्णां वाचो निर्यान्त्ययत्नतो वदनात्'॥

इति शक्तिबीजस्यापि सारस्वतफलकत्वमिति प्रदर्शितम्—

बीजमधोद्विजस्थं च वाचयापि समन्वितम् ।
एतत् सरस्वतीबीजं सद्यो वचनकारकम् ॥

इति । तथा—

मूर्ध्नोऽथ द्वादशान्तोदितशशिधरबिम्ब(स्थ)योनौ स्फुरन्तं
संवीतं व्यापकार्णैर्धवलरुचिमकारस्थितं बीजमन्त्यम् ।
ध्यात्वा सारस्वताच्छामृतजललुलितं दिव्यकाव्यादिकर्ता
नित्यं क्ष्वेलापमृत्युग्रहदुरितविकारान्निहन्त्याशु मन्त्री ॥

इति । अहमविद्यमानहकारमिति केचित् । तत् ह् सौः इति बीजाभिप्रायापेक्षम् । नाप्येवंफलकत्वं सम्पूर्णबीजस्यैवापितु तदेकदेशस्यापीत्युत्तरार्धेनाह 'अस्तु' इति । व इति युष्मच्छब्देन देव्या ग्रहणं सरस्वती शब्देन विद्यायाः, वो युष्मत्सम्बन्धिनीं सरस्वतीमनुगतो विद्यातृतीयबीजगतो वाग्देवतार्थवाचको वा सौरित्यत्र स्थितः स औरितिशब्दोऽपि जाड्याम्बुनो जाड्यं मतिमान्द्यं तदेवाम्बु जलं तस्य विच्छित्तये व्युपसंहरणायास्तु । न इति शेषः । कीदृश इत्यावृत्त्या विश्लिष्य विशेषणतया स् इतिपदं व्याख्येयम् । असविद्यमानः सकारो यस्य स बीजैकदेशमात्रसतत्त्व इत्यर्थः । 'स एवाग्निः सलिले संनिविष्ट' इति श्रुत्युक्तेः (श्वेताश्व० ६-१५) । और्वो वाडवाग्निरपि सरस्वतीमनुगतः सरस्वत्याख्याया नद्याः समुद्रान्तःप्रविष्टायाः समीपे समुद्र एव क्षिप्तोऽम्बु शोषयति इत्युपमाश्लेषध्वनिः । एवमुक्तबीजाक्षरसादृश्येन सरस्वत्यर्थविषयकेतरपदवर्णवृत्तिकोऽप्यसौ सारस्वतफलकत्वं नातिक्रामतीत्यत आह—गौरिति । तथा गौरिति शब्दो गिरि सरस्वत्यां नियतं वर्तते सरस्वतीदेवतार्थवृत्तिविषयकत्वान्निश्चयेन तद्वाचकः । सोऽपि योगं ध्यानाद्युपायविधिं विना सिद्धिदः सरस्वतीप्रसादात्मकसिद्धिजनको भवति । योऽगं गकारं विनेति वा स इति प्रसिद्धः । यद्वा औरिति शब्दः सरस्व-

त्यर्थवाचकः कीदृशः स इति विशेषणभावेनागिति पदं विश्लिष्यावृत्त्या योज्यम् । अग् अविद्यमानो गकारो यस्य सोऽसंयुक्तत्वात्स्वरूपमात्र इत्यर्थः । न चास्य प्रोक्तैतावन्मात्रफलजनकत्वं, पृथक् प्रातिस्विकार्थक्रियासामर्थ्यस्याप्याम्नातत्वात् तत्र केचिन्मन्त्रा नियतार्थवितरणप्रवणाः केचित्सामान्येन सर्वार्थदाः । तदुक्तमाचार्यैः—

'सन्ध्यक्षराः स्युश्चत्वारो मन्त्राः सर्वार्थसाधकाः' ।

इति । सकारवियुक्तत्वेऽपि नैयत्येनास्य वाग्विलासप्रभवत्वं, तत्संयुक्तत्वे तु किमु पुनरित्यपिशब्देन द्योत्यते । इत्थं ऐं ईं औरिति शुद्धा च पृथगुपदिष्टेति ॥५॥

एवं श्रीविद्यास्थबीजानां न केवलमुक्तसारस्वततत्त्वबोधफलोत्पादनसामर्थ्यमेव यावत्फलान्तराण्यपीति सामान्येन फलोत्पादशक्तित्वं प्रतिपादयति—

एकैकं तव देवि ! बीजमनघं सव्यञ्जनाव्यञ्जनं
कूटस्थं यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात् ।
यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं
जप्तं वा सफलीकरोति तरसा तं तं समस्तं नृणाम् ॥६॥

हे देवीति प्राग् व्याख्यातम् । तव सम्बन्धि एकैकं प्रत्येकं बीजमनघं व्यञ्जनाक्षरासंयुक्तत्वेन शुद्धप्रायं बीजमजात्मकं चेत्यावृत्त्या व्याख्येयम् । तदेव स्पष्टयति—सव्यञ्जनाव्यञ्जनमिति । व्यञ्जनानि स्पर्शान्तःस्थोष्मसंज्ञकानि तदन्यतमयुक्तं सव्यञ्जनं । यथाहस्थितेरयुक्तरीत्या 'हैं हीं हौरित्यादि' । तद्भिन्नमव्यञ्जनमज्मात्रतया सकेतविद्यास्वरूपमित्यर्थः । यदि वा सव्यञ्जनत्वेऽपि द्व्यादिहल्संसर्गानुपूर्व्या कूटस्थमक्षरपिण्डात्मकं सहसेत्युक्तरीत्या 'ह्सैं ह्स् क्लीं ह्सौरित्यादि' । षड्व्यञ्जनाधिष्ठितं वा यथा—ह् स् क् ल् र् डैं हसकलरडीं हसकलरडौरित्याद्यात्मकम् । तथा प्रथगकूटस्थितस्वरूपेण विश्लिष्टवर्णक्रमतया संयु-

त्ताक्षरात्मतां विहाय पंक्तिशः कृतसंनिवेशकं, तत्र पृथक्त्वेऽपि क्रमगतं वाग्भवादिक्रमस्थं एतद्विवृतपूर्वम् । यद्वा व्युत्क्रमात्क्रमवैपरीत्याच्छक्तयादिक्रमेण कामराजादिक्रमेण वा स्थितं, इत्यनेन सृष्टिस्थितिसंहारक्रमोऽपि ब्रह्मचर्याद्याश्रमिकोपासनापेक्षक इति सूचितवान् । तथा च सृष्टौ क्रमजपः स्थितिसंहारयोरक्रमजपः । तत्र त्रयाणां युगपत्प्रयोगारम्भे क्रमव्युत्क्रमविचारः, पृथक्पृथक्साधनप्रयोगादौ तु क्रमादिविचाराभावस्तत्र कामनाभेदेन तेषां परस्परमनपेक्षणात् तदुक्तं रुद्रायामले—

वाग्भवं प्रथमं देवि ! कामराजं द्वितीयकम् ।
तृतीयं शक्तिबीजं तु शिवयुक्तं सदा भवेत् ॥
एषा बाला समाख्याता सर्वदोषविवर्जिता ।
आद्यबीजं भवेन्मध्ये मध्यं चादौ नियोजयेत् ॥
एवं यो जपते मन्त्रं त्रैलोक्यैश्वर्यभाग्भवेत् ।
आद्यमन्तेऽन्तिमं मध्ये मध्यं चादौ नियोजयेत् ॥
एवं कृत्वा जपेन्मन्त्रं सर्वसिद्धिमवाप्नुयात् ।

इति । यं यमिति सुलभं दुर्लभं वा कामं काम्यमानं धर्मादिचतुर्वर्गं तदन्यतमं वापेक्ष्य समुद्दिश्य येन केनापि वा विधिना विधानेन सर्ष्याद्यङ्गन्यासक्रमेण वा श्रीगुरुपादुकामात्रस्मरणक्रमेण वा, यद्वा येन केनापीत्यागमाद्युक्तप्रकारेण यदृच्छागतेन वा, चिन्तितं स्ववाच्य देवता तादात्म्येन भावितं । यदुक्तम्—

'देवता गुरुमन्त्राणां भावयन्नैक्यमात्मना'

इति । सकलत्वेन निष्कलत्वेन तदुभयात्मकत्वेन वा देवतातादात्म्येन भावितम् । यदुक्तम्—'देवतागुरुमन्त्राणां भावयन्नैक्यमात्मना' इति सकलत्वेन निष्कलत्वेन तदुभयात्मकत्वेन वा ध्यातं, तथागमोक्तनियतलक्षसंख्यया पूर्वसेवात्मिकयोपांश्वादिभेदेन च जप्तं वेति विकल्पेन ध्यानजपयोः समुच्चयाभावेऽप्यभीष्टार्थसिद्धिरिति द्योतितम् ।

नृणां मनुष्याणामिति सामान्योक्तेरधिकारिनियमाभावात् स्त्रीशूद्राद-योऽप्येतदाराधनादावधिकृता इति बोध्यते। ब्राह्मणपरिव्राजकादयो ह्यधिकृता एव, तदुद्देशेनैवाशेषागमप्रवृत्तिदर्शनात्। अत्रापि 'विप्राः क्षोणिभुजो विशस्तदितरे' इत्याद्यग्रे वक्ष्यते। तं तं काममभीप्सितमर्थं समस्तं निखिलं तरसाचिरायेहैव जन्मनि न तु ज्योतिष्टोमादिवदपूर्वा-त्मना स्थित्वा लोकान्तरे सफलीकरोति फलं जनयतीत्यर्थः।
तदुक्तं ब्रह्माण्डे :—

तस्मादशेषलोकानां त्रिपुराराधनं विना।
न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित्॥
तन्मनास्तद्गतप्राणस्तद्याजी तद्गतेहकः।
तदात्मैक्येन कर्माणि कुर्वन्मुक्तिमवाप्स्यति।
एतद्रहस्यमाख्यातं सर्वेषां हितकाम्यया॥

इति। मूलभेदाः शुद्धास्तावच्चत्वारस्तेषामेकद्व्यादिप्रोक्तव्यञ्जन-साचिव्येनानेकधा भेदाः भवन्ति। विधयस्तु पद्धतिष्वाचार्यप्रदर्शिता-स्तत्तन्मतानुसारिणः प्रसिद्धाः इति तत्प्रदर्शनप्रयासेनालम्। जपादिल-क्षणं 'कुलार्णवे' :—

उच्चैर्जपोऽधमः प्रोक्त उपांशुर्मध्यमः स्मृतः।
उत्तमो मानसो देवि! त्रिविधः कथितो जपः॥
[1]अतिह्रस्वो व्याधिहेतुरतिशीघ्रे तपःक्षयः।
अक्षराक्षरसंयुक्त्या जपेन्मौक्तिकपंक्तिवत्॥
मनसा यः स्मरेत्स्तोत्रं वचसा वा मनुं जपेत्।
उभयं निष्फलं देवि! भिन्नभाण्डोदकं यथा॥

---

1. अतिह्रस्वो व्यादिहेतुरतिदीर्घस्तपः क्षयः।
अक्षराक्षरसंयुक्तो यो मन्त्रः स न सिध्यति॥
ख) अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत्।
ग) अक्षराक्षरसंयुक्त्या जपेन्मौक्तिकपंक्तिवत्।(मु०सं०)

जातसूतकमादौ स्यात्तदन्ते मृतसूतकम् ।
सूतकद्वयसंयुक्तो यो [1]मन्त्रः स न सिद्धयति ॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥
गुप्त[2]वीर्याश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥
चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ।
फलं नैव प्रयच्छन्ति लक्षकोटिजपादपि ॥ (१५ उ० ५४–६१ श्लो०)

इति । एकैकबीजजपक्रमश्च यथा :—

अच्छाभः स्वच्छभूषो धरणिमयगृहे वाग्भवं लक्षमेकं
यो जप्यात्तद्दशांशं विहितहुतविधिर्मन्त्रजप्ताञ्जनाभिः ।
काव्यैर्नानार्थवृत्तैर्भुवनमखिलमापूरयेच्च स्वकीयै
र्मारार्त्या विह्वलाभिः पुनरयमनिशं सेव्यते सुन्दरीभिः ॥

रक्ताकल्पोरुणतरदुकूलार्तवालेपहृद्यो
मौनी भूसद्मनि सुखनिविष्टो जपेल्लक्षमेकम् ।
बीजं मन्त्री रतिपतिमयं प्रोक्तहोमावसानम्
योऽसौ लोके ससुरमनुजैः सेव्यते पूज्यते च ॥

धरापवरके तथा जपतु लक्षमन्त्यं मनुं
सुशुक्लकुसुमांशुकाभरणलेपनाद्यो वशी ।
अमुष्य वदनादनारततयोच्चरेद् भारती
विचित्रपदपद्धतिर्भवति चास्य लोको वशे इति ॥६॥

यच्च श्रीपरदेवतायाः स्वरूपमागमेषु निष्कलादिभेदेन त्रिधोक्तं, तत्र निष्कलस्वरूपं 'ज्योतिर्मयी वाङ्मयी' इत्यनेन ग्रन्थकृदुपदिष्टवान् सकलनिष्कलोभयात्मकस्यैन्द्रस्येवेत्यनेन निर्देशः कृतोऽधुना-

---

1. यो यन्त्रः-(मु०सं०) 2. सुप्तबीजाश्च-(मु०सं०)

वशिष्यमाणं सकलध्यानस्वरूपं पञ्चभिः श्लोकैः प्रोक्तशुद्धबीजत्रयसाधारणध्येयतयोपदिशति—

वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे
भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम्।
उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब ! न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥७॥

अम्ब ते पारिपूर्ण्येन स्वात्मस्फुरत्तया विश्वं परामृशतीत्यम्बा, यदुक्तम्—

'आत्मनः स्फुरणं पश्येद्यदा सा परमाकला।
अम्बिका रूपमापन्ना परा वाक् समुदीरिता' ॥

इति। हे अम्ब ! विश्वजननि ! त्वां ये जनाः कवित्वाभीप्सवो मनसान्तर्मुखाविकल्पकवृत्तिना चेतसा न शीलयन्ति न समादधते अनन्यमनस्कतया न ध्यायन्तीत्यर्थः। एतज्जपस्याप्युपलक्षणम्। चिन्तितं जप्तं वेति पूर्वमुत्क्रान्तत्वात् तेन ध्यानपुरःसरं त्वद्विद्यामपि न जपन्ति, तेषां कवित्वं काव्यसन्दर्भनिर्माणप्रतिभाशालित्वं कुतो न व्यतिरिक्तात्कुतश्चित्कारणात्तत्संभवः स्यात् अथ च कवित्वं क्रान्तदर्शित्वं त्रिकालज्ञत्वम्। यद्वा नेति कुत इत्यनेन संबध्यायमर्थः, ये त्वां शीलयन्ति तेषां कवित्वं कुतो न'अनुत्पत्तिहेत्वभावात्स्यादेवेत्यर्थः। वस्तुतो ध्यानपूर्वक नियतजपादिप्राधान्यादेव प्रोक्तफलसंपत्तेर्दर्शनात् इत्यन्वयव्यतिरेकाभ्यां वाक्ययोजना कार्या। कीदृशीं वामे वामकरद्वये उर्ध्वाधः क्रमेण पुस्तकधारिणीमभयदाञ्चाशेषलौकिकालौकिकवाङ्मयाधारभूतत्वेन पञ्चाशद्वर्णमयमातृकालिप्यात्मकं पुस्तकमभयमुद्रां च धारयन्तीं, तथा दक्षिणे दक्षिणकरद्वये उर्ध्वाधोभावेन साक्षस्रजमक्षमालाधारिणीं सा चागमेषु कल्पिताकल्पितत्वेन द्विधोक्ता। तदुक्तं 'कुलार्णवे' :—

अक्षमाला द्विधा प्रोक्ता कल्पिताकल्पितेति च।

कल्पिता मणिभिः क्लृप्ता मातृका स्यादकल्पिता ॥
आदिक्षान्ताक्षरात्मत्वादक्षमालेति कीर्तिता । (१५उ०४८-४९)

इति । तथा सम्प्रदानीयेभ्यो भक्तेभ्य आराधकेभ्यो वरदानेऽभिमतार्थवितरणे पेशलो दक्ष उद्युक्तत्वात्करः पाणिर्यस्यास्तां वरमुद्राधारिणीमिति चतुर्भुजत्वादायुधध्यानमुक्तम् अत्र सिद्धिदानाशेषभयोन्मूलनज्ञानक्रियात्मकस्य परदेवतास्वरूपस्योन्मेषकत्वाभिव्यक्तये वराभयदत्ववहत्वम् । तथा कर्पूरो घनसारः कुन्दं माध्यं पुष्पविशेषश्च तद्वदुज्ज्वलां शोभमानां शुक्लवर्णामित्यर्थः । अनेन श्वैत्यसौरभ्यसौकुमार्यादिगुणवत्त्वमभिहितम् । शुक्लविलेपमाल्याम्बरां शीतांशुखण्डमौलिं चेत्यपि द्रष्टव्यम् । तथा उद्गता जृम्भा विजृम्भणं विकासो यस्य तदुज्जृम्भमुन्निद्रं यदम्बुजं पद्मं तस्य यानि सरसान्तर्दलानि तद्वत्कान्तानि मनोहराणि नयनानि नेत्राणि तेषां या स्निग्धप्रभा मसृणकान्तिस्तया युक्त आलोक आलोकनमस्त्यस्यास्तामुज्जृम्बाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीम् । तदुक्तं वाग्भवबीजसाधनमुपक्रम्य 'ज्ञानार्णवे' :—

वाग्भवाख्यां जपेद्विद्यां वागीशीं संस्मरन् बुधः ।
कर्पूरधवलां शुभ्रपुष्पाभरणभूषिताम् ॥
अत्यन्तशुभ्रवसनां वज्रमौक्तिकभूषणाम् ।
मुक्ताफलामलमणिजपमालालसत्कराम् ॥
पुस्तकं वरदानं च दधतीमभयप्रदाम् ।
एवं ध्यायेन्महेशानि सर्वविद्याधिपो भवेत् ॥

इति । अस्य ध्यानस्य चिन्तनं साधकमूलाधाराधिकरणकम् । तदुक्तं पञ्चदशीमधिकृत्य 'श्रीविद्यार्णवे' :—

मूलाधारे वाग्भवाख्यं कूटं संचिन्तयेद्बुधः ।
वाग्भवाख्यस्य कूटस्य ऋषिर्ब्रह्मा समीरितः ॥
छन्दो गायत्रमाख्यातं देवता वागधीश्वरी ।
आद्यवर्णं तु बीजं स्यादन्त्यं शक्तिः समीरिता ।
मध्यत्रयं कीलकं स्याद् वाक्सिद्धयै विनियोगकम् ॥

इति । ध्यानमपि—

'शुक्लां स्वच्छ विलेपमाल्यवसनां शीतांशुखण्डोज्ज्वलां ।
व्याख्यामक्षगुणं सुधाढ्यकलशमित्यादि' ।

अथ चात्रायुधमात्रवर्णनसाम्यात्संपत्प्रदा भैरव्या अपि ग्रहणं बोध्यं बालावदेवास्याः पूजादिकं, ध्यानं तु यथा ज्ञानार्णवे :—

आताम्रार्कसहस्राभां स्फुरच्चन्द्रकलाजटाम्
किरीटरत्नविलसच्चित्रचित्रितमौक्तिकाम् ।
स्रवद्रुधिरपंकाढ्यमुण्डमालाविराजिताम्
नयनत्रयशोभाढ्यां पूर्णेन्दुवदनान्विताम् ।
मुक्ताहारलताराजत्पीनोन्नतघटस्तनीम्
रक्ताम्बरपरीधानां यौवनोन्मत्तरूपिणीम् ।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम्
वरदानरतां नित्यां महासंपत्प्रदां स्मरेत् ।

इत्येतस्या मन्त्रोद्धारस्तु प्राक् प्रपञ्चितः ।।७।।

इदानीं समनन्तरोक्तध्येयस्वरूपस्य स्थानविशेषोपासनाप्रदर्शनपूर्वकं वाग्विभूतिविलासफलमनुवदति—

ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां
सिञ्चन्तीममृतद्रवैरिव शिरोध्यायन्ति मूर्ध्नि स्थिताम् ।
अश्रान्तं वि[1]कटस्फुटाक्षरपदा निर्याति वक्त्राम्बुजा-
त्तेषां भारति ! भारती सुरसरित्कल्लोललोलोर्मिवत् ।।८।।

हे भारति ! वचोऽधिष्ठातृदेवते सरस्वति ! ये धार्मिकत्वाद्वाक्सिद्धिकामास्त्वां मूर्ध्नि स्थितां द्वादशान्तस्थाने ध्येयत्वेन कृतावस्थानां ध्यायन्ति संचिन्तयन्ति । कीदृशीं पाण्डुराणाममलिनानां पुण्डरीकाणां

---

1. 'विकच' इति पाठान्तरम् । (गणपति शास्त्री त्रिवेन्द्रम्)

सिताम्भोज़ानां पटलं समूहस्तद्वत्स्पष्टात्युज्ज्वलत्वाद्वथक्ताभिरामा द्रष्टृ-मनोहारित्वात् मनोज्ञा च प्रभा देहकान्तिर्यस्यास्ताम्, अत्र पुण्डरीकाणां पाण्डुगुणवत्त्वेऽपि विशेषणेन शुक्लत्वाधिक्याभिधानान्न विशेषणानर्थक्यम् । तथा शिरो मस्तकं ध्यातृसम्बन्धि मूर्धस्थितत्वादेवामृतद्रवैः स्वाङ्गगलितपीयूषरसवृष्टिभिः सिञ्चन्तीं प्रवर्षन्तीं । इव शब्दो वाक्यालङ्कारे । यदुक्तम्—

मूर्ध्नि पुस्ताक्षमाला[1]भीवरदोज्ज्वलविग्रहाम् ।
शिवशक्त्यात्मिकां ध्यायेत्कुन्देन्दुधवलप्रभाम् ॥

इति । तेषां ध्यानसमापन्नतद्भावनापरिपाकलब्धसारस्वतप्रसादानां वक्त्रोदरान्मुखकमलान्तरालाद् विकटस्फुटाक्षरपदा विकटानि समासबहुलत्वादोजोगुणोपेतानि विस्तीर्णानि । विकचेति पाठे शब्दार्थालङ्कारान्वितप्रसादगाम्भीर्यादिगुणोज्ज्वलानि स्फुटाक्षराणि तत्तदर्थाभिव्यञ्जनक्षमाणि श्रुतिकटुत्वादिदोषविहीनानि च पदानि सुप्तिङन्तानि यस्यां सा तथाविधा भारती गद्यपद्यादिमयी वाणी अश्रान्तं श्रमरहितमविरतं निर्याति निःसरति । कथं सुरसरित्कल्लोललोलोर्मिवत् सुरसरितो भागीरथ्या ये कल्लोला महान्तो वीचयस्तेषां ये लोलाश्चञ्चला ऊर्मयो विच्छित्तयस्तद्वन्निःसरदविच्छिन्नसूक्तिप्रवाहेत्यर्थः ।

ऊर्मिः पीडाजवोत्कंठाभंगप्राकाश्यवीचिषु ।
वस्त्रसंकोचलेखायामिति हैमः ॥

एतच्च वाग्भवसाधनमुद्दिश्य वर्णितं वामकेश्वरे—

[2]सत्तर्कपदवाक्यार्थशब्दालंकारसारवित् ।
[3]वाताहतसमुद्रोर्मिमालातुल्यैरुपन्यसेत् ॥

---

1. 'पुस्ताक्षमालाभिर्वरदो' इत्येष शुद्धः पाठः संलक्ष्यते ।
2. षट्तर्क (का०) . 3. वातोद्भूत

सुकुमारतरस्फारवृत्तालङ्कारपूर्वकम्[1] ।
पदगुम्फैर्महाकाव्यकर्ता देवेशि ! जायते ॥८॥ (४ प० २७-२८)

एवं तावद्वाक्स्फुरत्तादिधर्मार्थिनामुपास्यं ध्येयस्वरूपं निरूप्य द्वितीयबीजस्य ध्यानप्रदर्शनपूर्वकं कामिनीवश्यात्मफलमाह—

ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमा-
मुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव ।
पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर-
क्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्याः भवन्ति स्फुटम् ॥९॥

अत्र भारतीति सम्बोधनमनुषज्ज्यते । हे भारति ! वागधिदेवते ! ये कामार्थित्वात् कामिन्यादिवशीकारेच्छवः साधकास्त्वत्तेजसा तव कामानुगुणविभाव्यमानारुणवर्णायास्तेजसाश्रीमूर्त्युक्तलाक्षारुणकान्तिप्रतानेन करणेनेमां द्यामन्तरिक्षं सिन्दूरपरागपुञ्जपिहितामिव सिन्दूरधूलिराशिभिरुपरंजितामिवोर्वीमपि भुवं च विलीनयावकरसप्रस्तारमग्नामिव विलीनो विद्रुतश्चासौ यावकरसोऽलक्तकरसः, विलीनस्य निर्मलीकृतत्वेनात्यारक्तवर्णत्वम्, तस्य प्रस्तारे प्रवाहे मग्नां ब्रुडितामिव । रक्तवर्णे निमग्नस्य रक्तिमोपजनदर्शनात् । तेन भवत्यास्तेजः पुञ्जसाद्भाव्येन द्यावापृथिव्यौ त्वद्रश्मिचया भेदस्वरूपा इति गम्यते । एवमग्रेऽपि बोध्यम् । तदुक्तं ब्रह्माण्डे—

'निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला' । इति ।

स्वशक्तिप्रचयोऽस्य विश्वम् (शि० सू० ३-३०) इति । शक्तयोऽस्य जगत् कृत्स्नमि'ति च । इवशब्दस्तन्त्रेणोभयत्र संयोज्यः । क्षणमप्यनन्यमनस अविद्यमानमन्यत्र विषये मनश्चेतो येषां तेऽनन्यमनसः एक-

---

1. पूर्वकैः (का०)

तानवृत्तयो भूत्वेति प्रत्याहारो दर्शितः। तेन प्राणायामादिपूर्वकदोषानुपसंहृत्येन्द्रियाणि शब्दादिस्वस्वविषयेभ्यो मनसा सह प्रत्याहृतवन्तः इत्यर्थः। क्षणमपीत्युक्तेरयमभिप्रायः—य एव मन्त्रसिद्धास्तेषामेव क्षणमात्रध्यानव्यापारेणोद्दिष्टफललाभो भवेत्। अन्येषां तु पुरश्चर्यात्मक पूर्वसेवायत्तत्वात्तत्सिद्धेरित्येवमग्रेऽपि बोद्धव्यम्।

ननु 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुत्या (बृह० १, ४, १०),

'उज्झित्वात्मसमाधानं ये ध्यायन्त्यन्यदेवताः।
भिक्षन्ते भूरिवित्तास्ते भिक्षित्वापि बुभुक्षिताः'।

इत्यादिस्मृत्या च, जुगुप्साश्रवणात्, कथं वा स्वस्माद्भिन्नध्येयगततदीय विभवादिपरामर्शनेन ध्यातुरपि तद्विभवामोदचमत्कारप्राप्तिर्येनात्र प्राकरणिकं वश्यत्वादि स्यात्, न ह्यन्यभोजनादिनाऽन्यस्य तुष्टिपुष्टी स्यातामित्यनुपपत्त्या च भेददर्शिनामुपासना निष्फला स्यादित्याशंकायामन्यथा व्याख्येयम् अनन्यमनस इति स्वाभिन्नविमर्शवन्तः स्वात्मानमेव तथाविधत्वद्रूपतादात्म्येन परामृशन्तः, स्वात्मतादात्म्येनोक्तविधस्वरूपां त्वामुपासीना इत्यर्थः। यदुक्तम्—'देवी भूत्वा यजेद्देवीम्' इति। एवं रोधसी पश्यन्ति ध्येयैक्यभावेन समाप्तिपर्यन्तं भावयन्तीति भावः। ननु किं फलं पुनस्तैः प्राप्यमित्यत आह तेषामिति। तेषामुक्तप्रकारेण ध्यानपरामर्शं निभालयमानानामनङ्गज्वरेण दृष्ट्यादिसमुत्पन्नमदनजन्यसन्तापेन क्लान्ता विवशीभूततनुलतास्तथा त्रस्तो भीतो यः कुरङ्गशावको हरिणबालकस्तस्य दृग् दृष्टिरिव यासां ताः सर्वाङ्गसौन्दर्यविभ्रमवरयः कामिन्योऽपि ध्रुवं निश्चितं वश्या आयत्ता भवन्ति। अपिर्भिन्नक्रमोऽपि। तेन न केवलं स्त्रीणामेव वशगत्वं राजानोऽपि वश्याः स्युरिति। तदुक्तं 'ज्ञानार्णवे'—

तदीय कान्तिसिन्दूरभरितं भुवनत्रयम्।
चिन्तयेत्परमेशानि! त्रैलोक्यं मोहयेत्क्षणात्॥

राजानो वशमायान्ति पन्नगाः राक्षसाः सुराः ।
कन्दर्प इव देवेशि ! योषितां मानहारकः ॥
मनसा चिन्तयेद् योषिद्दासीव वशगा भवेत् ।

इति । अत्राप्यागमोक्तनियतजपादिसंख्यया प्राग्वत्फलसंपत्तिर्बोध्या । अत्र समनन्तरश्लोके स्थानविशेषस्योक्तत्वात् 'ये त्वां चेतसि' इत्युत्तरस्मिन्नपि वक्ष्यमाणत्वादिह स्थानविशेषो नोद्दिष्टः, तच्चाचार्योक्तिप्रामाण्यादाधाराख्यमुक्तध्यानविषयकमिति गम्यते । तदुक्तम्—

आधाराब्जे धनुर्बाणवरदाभयलक्षिताम् ।
ध्यायेद्बन्धूकपुष्पाभां कामराजस्वरूपिणीम् ॥

तथा—

गुह्यस्थितं वा मदनस्य बीजं जपारुणं रक्तसुधास्रवन्तम् ।
विचिन्त्य तस्मिन्विनिवेश्य साध्यां वशीकरोत्येव विदग्धलोकः ॥

इति । दुर्वाससापि—

अभिनवसिन्दूरभामम्ब ! त्वां चिन्तयन्ति ये हृदये ।
उपरि निपतन्ति तेषामुत्पलनयनाकटाक्षकल्लोलाः ॥९॥

इति । एवं कामार्थिनां कामावाप्तिसाधनद्वितीयबीजस्य ध्यानं तत्फलं चोपदिश्याधुनार्थार्थिनां ध्येयस्वरूपोपदेशपूर्वं तत्संपत्सिद्धिफलमाह—

चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजम्
ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थितिम् ।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णताललतरलाः स्थैर्यं भजन्ते श्रियः ॥१०॥

अत्रापि भारतीत्यनुषज्जनीयम् । हे भारति ! वागधीश्वरि ! येऽर्थार्थित्वाद्गवाश्वादिपशुहिरण्यरत्नवसुधादिसम्पदेषिणः साधकास्तद्गते चेतसि तच्छब्देन ध्यानं ग्राह्यं, तेन ध्यानगते ध्यानैकताने मनसि

स्थितिं कृत्वा देशबन्धरूपां धारणामास्थाय, स्थिरामिति पाठे हृदय-कमले स्थिरां कृत्वा निश्चलीकृत्य क्षणमपि क्षणमात्रकालमिति सिद्ध-मन्त्रोपासकविषयकमिति प्राग्वदेव। त्वां ध्यायन्ति स्वात्मैक्यभावन-योपासते न त्वन्यथा, मन्त्रिमन्त्रदेवतयोराराध्याराधकभावेन भेद-भावनायां हि फलसिद्धिविलम्बस्योक्तत्वात्। तदुक्तं 'श्रीश्रीकण्ठसं-हितायाम्' :—

'पृथङ्मन्त्रः पृथङ्मन्त्री न सिध्यति कदाचन।
ज्ञानमूलमिदं सर्वमन्यथा नैव सिध्यति'॥

इति। श्रीस्पन्देऽपि—

'अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि।
तदात्मतासमापत्तिरिच्छतः साधकस्य या'॥(नि० २ श्लो० ६)

इति। त्वां कीदृशीं चञ्चत्काञ्चनकुण्डलाङ्गदधरां कुण्डले चाङ्गदा-नि च कुण्डलाङ्गदानि चञ्चन्ति देदीप्यमानानि काञ्चनानि सुवर्णमयानि च तानि कुण्डलाङ्गदानि कर्णदोर्भूषाः। धरतीति धरां। धृञ् धारणे पचाद्यच्, कर्णयोर्हेमकुण्डले दोर्लतासु हैमाङ्गदानि बिभ्रतीमित्यर्थः। तथा आबद्धकाञ्चीस्रजम् आबद्धा संधृता काञ्ची स्रग् रशना दाम यया तां, स्त्रीकटिभूषणविशेषो वस्त्रबंधनः काञ्चीत्युच्यते। एतद्रत्नमौलिहार मञ्जीराद्युपलक्षणम्। तदुक्तम्—

ताटङ्कयुगलीभूततपनोडुपमण्डला।
कनकाङ्गदकेयूरकमनीयभुजान्विता।
रत्नकिंकिणिकारम्यरशनादामभूषिता।

इत्यादि। तेषां वेश्मसु प्रासादेषु माद्यत्कुञ्जरकर्णतालतरला मा-द्यतामुद्भिन्नकटभित्तिकत्वेन क्षरन्मदसलिलानां मत्तकुञ्जराणां गन्ध-गजानां कर्णतालवत्कर्णास्फालवत्तरलाश्चञ्चला अस्थिरस्वभावा अपि श्रियः संपदो गजतुरगवाहनद्रव्यरत्नादिसमृद्धिरूपाश्चिरं स्थैर्यं स्थिर-तां भजन्ते सेवन्ते निरन्तरतया तिष्ठन्तीत्यर्थः। अनेन निसर्गतोऽस्थि-

रस्य स्थैर्यापादनेन स्वभाववैपरीत्यकरणात्मकातिदुर्घटकार्यकारित्वलक्षणमाश्चर्यकर्माभिहितम् । कीदृश्यो विभ्रमाद्विभ्रमं शोभां विलासं वा, लीलया गजाश्वाद्यनेकरूपाविर्भावनं वाश्रित्य अहरहरनुदिनं स्फारीभवन्त्य उपचयमुपगच्छन्त्यो वर्धमाना न त्वपचीयमाना इति भावः। तदुक्तम्—

हृत्पद्मस्थितभानुबिम्बविलसद्योन्यन्तरालोदितं
मध्याह्नार्कसमप्रभं परिवृतं वर्णैः कफाद्यन्तकैः ।
ध्यायेन्मन्मथराजबीजमखिलं ब्रह्माण्डविक्षोभकं
राज्यैश्वर्यविवर्धिनीमपि रमां दत्त्वा जगद्रञ्जयेत् ॥

श्रीदुर्वाससापि—

कनकशलाकागौरीं कर्णव्यालोलकुण्डलद्वितयाम् ।
प्रहसितमुखीं च भवतीं ध्यायन्तो ये त एव भूधनदाः ॥१०॥

इति । इदानीं द्वितीयबीजगतनिष्कलाक्षरस्य सारस्वततत्त्वसाक्षात्करणेऽन्तरङ्गसाधनभूतत्वेन तदधिदेवताध्यानं मोक्षार्थिसेव्यं सफलमुपदिशति—

आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं
मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंवित्तये ॥११॥

इहापि पूर्ववत्सम्बोधनपदानुषङ्गः । केचिदिति चाध्याहार्यम् । हे भारति ! केचित्त्वत्सारूप्यलक्षणमुक्त्यभीप्सवस्त्वां त्वद्रूपसंवित्तये तव रूपस्य परामृश्यमानध्यानविशेषस्य संवित्तये सम्यग् लाभाय त्वद्रूपं सम्प्राप्तुमित्यर्थः । तुमर्थाच्च भाववचनादिति संप्रदानत्वम् । ध्यायन्त्यभेदबुद्धया चिन्तयन्ति । कीदृशीं, आर्भट्येति, आर्भटयात्यादरे-

णेत्यर्थः, यद्वा आर्भटीनामासनविशेषः। तदुक्तम्—

'उरुद्वयं निधायोर्वोः स्थितिरार्भटिकासनमिति'।

एवमुक्तलक्षणार्भटयासनेन प्रेतासनाध्यासिनीं प्रकर्षेणेतः संमिलितः स्फुटेदन्तां निमज्ज्याहन्ताप्रधानां स्थितिमुन्मग्नामनुप्रविष्टः, प्रकर्षेण चेतं गतं सम्बद्धं विश्वमीश्वरादिभूम्यन्तं यस्येति व्युत्पत्या प्रेत इहापरया व्याप्त्या सदाशिवः स्थूलः, परयानाश्रितशिवरूपः, परापरया तु नादरूप इति बोध्यम्। तत्पर्यन्तमधस्तनतत्त्वजालस्यासनपक्षीकृतत्वात्, एषा भगवती सर्वतत्त्वान्याश्रित्य तिष्ठति, इति देवीभागवतात्, तल्लक्षणमासनमध्यास्ते ताच्छील्येनेति तदध्यारूढामित्यर्थः। अथ च प्रेता ब्रह्मविष्णवाद्याः पञ्च तेषां वामादिस्वस्वशक्तिवियोगे सति धर्म्यंशेन सर्गादिकार्याक्षमत्वात्तैः कल्पित आसनेऽध्यासिनीमुपर्यासीनाम्। तदुक्तं 'ज्ञानार्णवे':—

पञ्च प्रेतान्महेशान ! ब्रूहि तेषां तु कारणम्।
निर्जीवा अविनाशास्ते नित्यरूपाः कथं वद ॥

इत्यादिना देव्याः पृष्टे ईश्वरोक्तिः—

साधु पृष्टं त्वया भद्रे ! पञ्चप्रेतासनं कथम्
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
पञ्चप्रेताः वरारोहे ! निश्चला एव ते सदा
ब्रह्मणः परमेशानि ! कर्तृत्वं सृष्टिरूपकम्।
वामा शक्तिस्तु सा ज्ञेया ब्रह्मा प्रेतो न संशयः
शिवस्य करणं नास्ति शक्तेस्तु करणं यतः।

इत्यारभ्य

सदाशिवो महाप्रेतः केवलो निश्चलः प्रिये !।
शक्त्या विनाकृतो देवि ! कथञ्चिदपि न क्षमः ॥

इत्यन्तम्। तथा शशिखण्डेन चन्द्रकलया मण्डितो भूषितो जटाजूटः केशकलापो यस्यास्ताम्। यद्वा जटाजूटशब्देन मुकुटमुपलक्ष्यते।

तेन शशिखण्डैश्चन्द्रकान्तमणिभिर्मण्डितं खचितं मुकुटं यस्यास्ताम्। नृमुण्डस्रजं नृमुण्डवदतिस्थूलशुभ्रमुक्ताफलोपेता स्रग् मुक्तादाम यस्यास्तां। केचित्तु—मल्लिकामालावतीं चम्पकस्रग्विणीं वेत्याहुः। 'बन्धूकप्रसवारुणाम्बरधरां' बन्धूकप्रसववद्बन्धुजीवकपुष्पवदरुणानि रक्तानि अम्बराणि वस्त्राणि धारयतीति तां मसृणरक्तकौशेयवस्त्रवतीम्। तथा चतुर्भुजां चतुर्बाहुं शान्त्यतीता भिन्नायाः देव्याः शान्तादिशक्तिस्फारणातिशयात् चतुर्भुजत्वम्, त्रिनयनां त्रीणि नयनानि नेत्राणि यस्यास्तां स्वमहिमावभासितेच्छादिशक्तित्रययोगात् तथा पीनौ पीवरौ तुङ्गावुन्नतौ च स्तनौ पयोधरौ यस्यास्तामापीनतुङ्गस्तनीम्। अतस्तद्भाराक्रान्तत्वादिव मध्येऽवलग्नप्रदेशे समुद्भूतेन निम्नेनावगाढेन च वलित्रयेण वलिस्त्वक् संकोचस्तत् त्रयेणाङ्किता लाञ्छिता तनुस्तनूर्यस्यास्ताम्, यद्वा निम्नावनता त्रिभङ्ग्यङ्किता च तनुर्यस्यास्तां, सर्वाङ्गसुन्दरीमित्यर्थः। तदुक्तं 'ब्रह्माण्डपुराणे' :—

'स्तनभारदलन्मध्यपट्टबन्धवलित्रया'। इति ॥११॥

अधुना समनन्तरोक्तध्यानैकतमप्रकारेण देवीमुपासीनानां सर्वैश्वर्यसर्वज्ञतादयः सिद्धयः सुलभा इतीतिहासनिदर्शनपूर्वमुपक्षिपति—

जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः।
यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभवद्
देवि! त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ॥१२॥

हे देवि! जगत्सर्जनादिक्रीडाशीले! श्रीवत्सराजो नामोदयनापराभिधः किल कौशाम्बीनगरे राजा क्षितिभुजां भूपालानां सामान्यमात्रे मात्रशब्दोऽवधारणे सामान्य एवानत्युच्चे कुले वंशे न तु मूर्धाभिषिक्तानां क्षत्रियाणां तस्य माण्डलिकत्वात्। कीदृशे कुलेऽल्पपरिच्छदे अल्पे स्तोकाः परिच्छदा गजाश्वपशुधनधान्यक्षेत्रादयो यस्मिंस्तादृशे जातो

लब्धजन्मापि निःशेषायाश्चतुःसागरपर्यन्ताया अवनेः पृथिव्याश्चक्रवर्ती चक्रे भूमण्डले राजमण्डले वा वर्तितुं शीलमस्य, यद्वा चक्रं सैन्यं वर्तयितुं सवभूमौ चालयितुं शीलमस्येति चक्रवर्ती सर्वपृथिवीपतित्वात् सार्वभौमो राजा तस्य पदवीमुच्चपदं लब्ध्वा प्राप्य प्रतापोन्नतः प्रतापः कोषदण्डादिजन्यं तेजस्तेनोन्नतः प्रांशुः प्रवृद्ध इत्यर्थः। यदभवत्, तथा विद्याधरवृन्दवन्दितपदो विद्याश्चतुःषष्टिकलात्मिकाः षडङ्गवेदमीमांसादयोऽष्टादश वा ता धारयन्ति अध्ययनाध्यापनतदर्थानुष्ठानादिनाभ्यस्यन्ति ते विद्याधरा विपश्चितः। यदुक्तम्—

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश। (ना० पू० ५, ९)
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति तत्त्रयम्।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादश स्मृताः' ॥

इति। तेषां विद्याधराणां वृन्देन व्यूहेन वन्दितौ पूजितौ पादौ चरणौ यस्येति यच्चाभवद्, एवं तासु तासु विद्यास्वभिज्ञत्वेन विद्वत्समूहपूज्यतया राज्ञामाज्ञया शासकत्वाच्च सर्वज्ञः सम्राट् चेति यत्सोऽयं त्वच्चरणाम्बुजप्रणतिजस्तव चरणावम्बुजे इव सौकुमार्यारुणिमादिगुणवत्त्वात्तयोश्चरणाम्बुजयोः पादकमलयोः प्रणतेः पूजाराधनादिभक्तिलक्षणात्प्रणामान्निमित्ताज्जायते इति तज्जस्तत्प्रकृतिकः प्रसादोदयोऽनुग्रहाविर्भावः, एतत्तस्य तवैव सेवाफलमिति यावत्। अत्र केचिद्विद्याधरेति शब्दे श्रीत्रिपुराविद्याभिज्ञा इत्याचक्षते, तन्नोपपद्यते। तथात्वे हि, तद्वन्द्यत्वेन स्वयं तस्य परदेवतायां भक्तिराहित्यं व्यज्येत। अपरे तु—देवयोनिषु केचन गीतनृत्तादिकुशला वैमानिकाः, इत्येवं तेषां दिव्ये विद्याधरपदे दीव्यतां भूमिस्थराजसेवकत्वासंभवान्न न्याय्यम्। 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मनुष्यगन्धर्वाणामानन्दः' इति श्रुतेः ॥१२॥

अथ देवीचरणाराधनादिहीनानामुक्तसाम्राज्यादिफलं दुर्लभमिति व्यतिरेकोक्तिरीत्या विवृणोति—

चण्डि ! त्वच्चरणाम्बुजार्चनविधौ बिल्वीदलोल्लुण्ठन-
त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः ।
ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितै-
र्जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥१३॥

हे चण्डि ! निजाराधनपराङमुखेषु कोपनशीले ! तेषां विप्रियकरणात्

'भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषादग्निश्च वायुश्च मृत्युर्धावति पञ्चमः ॥' इति श्रुतेः (नृ०-पू०२-१०)

भयप्रदत्वलिङ्गादेव हि कम्पनाधिकरणे 'महद्भयं वज्रमुद्यतमिति' श्रुतौ वज्रपदं ब्रह्मपरमित्युक्तम् । येषां प्राणिनां कराः पाणयस्त्वच्चरणाम्बुजार्चनविधौ तव चरणावम्बुजे इव लौहित्यसौकुमार्यादिगुणवत्त्वात्तयोश्चरणाम्बुजयोः पादकमलयोरर्चनविधौ पञ्चोपचारादिपूजाविधाननिमित्तं 'निमित्तार्थलक्षणे सप्तमी' । अर्चनकृते इति पाठे तु अर्चनार्थमित्यर्थः । 'बिल्वीदलोल्लुण्ठनत्रुटयत्कण्टककोटिभिः'अल्पो बिल्ववृक्षो बिल्वी तद् दलानां बिल्वपत्राणामुल्लुण्ठने प्रत्यहमुच्छेदने त्रुटयतां छेदंकुर्वाणानां इति अन्तर्भावितण्यर्थतया त्रुटेः सकर्मकत्वव्यवस्थायां बोध्यम् नान्यथा । तेन पत्रोच्चयकारिकरान् विदारयतां कण्टकानां तीक्ष्णाग्रद्रुमाङ्गानां कोटिभिरग्रैः परिचयं संसर्गाभ्यासं न जग्मुः प्रापुः । निसर्गतो हि बिल्वतरवः कण्टकाक्रान्ताः, अतो बिल्वपत्राण्युच्चिन्वन्तस्तच्छूकविलिखितकरा ये नाभूवन्नित्यर्थः । अत्र केचित् त्रुटयतां छिद्यमानानामिति व्याचक्षुस्तन्नोपपन्नम् । कण्टकानामुच्छेदने तात्पर्याभावात् । अतिकाठिन्यस्वभावत्वेन स्वयमपि छिदेरसम्भवात् । यद्वा बिल्वोदलोल्लुण्टनेन सह त्रुटयतां छिद्यमानानां तत्संसर्गित्वात् कण्टकानामिति विग्रहीतव्यम् । तथा त्रुटयन्तीभिः कण्टककोटिभिरिति वा बिल्वपत्राणामागमेषु पुष्पगणनया विधानात् । तदुक्तम्—

पत्रेषु बिल्वपत्रं स्यान्नान्यत्पत्रं विशिष्यते
हयमारसरोजानामीषद्विकसितं भवेत् ।

इति । ते दण्डाकुंशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितैर्दण्डो गदा अकुंशः सृणिश्चक्रं वलयाकारादि वा त्रिकोणादि चापो धनुः कुलिशो वज्रं श्रीवत्सश्चिह्नविशेषो मत्स्यो मकरस्तत्तद्रेखाकृतिभिरङ्कितैश्चिह्नितैरम्भोजप्रभैर्लौहित्यादिगुणेन पद्मकान्तिभिः पाणिभिः करैरुपलक्षिताः पृथिवीभुजो भूपालाः कथमिव जायन्ते न कथञ्चिदित्यर्थः । इव शब्दो वाक्यालङ्कारे । य एव कण्टकादिक्षतकरास्त एव क्षतस्थानीयचक्राकुंशादिलाञ्छिता नृपतिकुलेषु महीं भोक्तु जन्म लभन्ते इति भावः । तदुक्तं सामुद्रिके—

शक्तिस्तोमरबाणाश्च करमध्ये सुदृश्यते ।
रथचक्रध्वजाकारः स राज्यं लभते नरः ।।
अकुंशं कुण्डलं चक्रं यस्य पाणितले भवेत् ।
तस्य राज्यं महाश्रेष्ठं सामुद्रवचनं यथा ।।

इत्यादि । पाणीत्युपलक्षणं, पादतलेऽपि प्रोक्तचिह्नानां विद्यमानत्वेन राजत्वलक्षणस्योक्तत्वादिति ।।१३।।

इदानीं देवीपादार्चनविधौ प्रस्तुतायां यथाधिकारं विहितद्रव्यसाधनैश्चक्रराजतर्पणे भक्तानां निष्प्रत्यूहं फलसिद्धिरित्याह—

विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवै-
स्त्वां देवि ! त्रिपुरे ! परापरमयीं सन्तर्प्य पूजाविधौ ।
यां यां प्रार्थयते मनः स्थिरधियां तेषां त एव ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैर्[1]विग्नी कृताः ।।१४।।

श्रुतिस्मृत्यादिविद्यासंपन्नाः ब्राह्मणा विप्राः । तदुक्तं ब्रह्मवैवर्ते—

1. 'निघ्नीकृताः' पाठान्तरम् ।

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

इति । वेदादिवित्त्वादेवाशेषदेवताश्रयतया प्राधान्येन विप्राणामेव देव्यर्चनादावधिकारः । 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ती'ति श्रुतेः । (सहवै० १९) संमानादिना ब्राह्मणाः क्षीयमाणब्रह्मवर्चसा भवन्ति तेषां च परदेवताया विद्याजपादिना पुनराप्यायनं भवतीति अभिप्रायात्सर्वानन्दमयबिन्दुचक्रसन्तर्पणस्यावश्यकर्तव्यत्वात् । तदुक्तमापस्तम्बस्मृतौ—

अपमानात्तपोवृद्धिः संमानात्तपसःक्षयः ।
अर्चितः पूजितो विप्रो दुग्धा गौरिव सीदति ॥
आप्यायते यथाहःसु तृणैरमृतसम्भवैः ।
एवं जपैश्च होमैश्च पुनराप्यायते द्विजः ॥

इति । क्षोणिभुजः पृथिवीपालाः विशो वैश्यास्तेभ्य इतरे तदितरे स्त्रीशूद्रादयः, एतेन वेदानां त्रैवर्णिकोपास्यत्वमागमानां तु चातुर्वर्ण्योपास्यत्वमित्यधिकारिविशेषो ध्वन्यते । तथा च रुद्रयामले—

यद्वेदैर्गम्यते स्थानं तत्तन्त्रैरपि गम्यते ।
ब्रह्मक्षत्रियविट्शूद्रास्तेन सर्वेऽधिकारिणः ॥

इति । एवं ये चत्वारो वर्णाः सन्ति, हे देवि त्रिपुरे ! इति च प्राग्वत् । क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदकान्तिगतयोऽत्राशेषा दीव्यतेरर्थाः । विना स्वप्नं देवतानामस्वप्नत्वात् तेन दीव्यति क्रीडते विजिगीषते व्यवहरति द्योतते स्तूयते इत्यादि स्थितया देवीति नामनिर्वचनं प्राक् निर्णीतं निर्णेष्यते च । त्वां परापरमयीं सकलनिष्कलोभयप्रकृतस्वरूपां शिवशक्तिसामरस्यमयीं बिन्दुतर्पणसन्तोषणीयां, यद्वा त्वां कीदृशीं परापरमयीं पर आद्योऽनुत्तरात्मापरोऽन्त्यो विसर्गात्मा तदुभयस्वभावत्वात् पराहंपरामर्शात्मकमन्त्रवीर्यस्वरूपां, यद्वशा-

न्मन्त्राणां शक्त्याधाने प्राप्तसामर्थ्यानां प्रतिनियतस्वस्वकार्यसंपादन-चातुर्यं संजायते। अन्यथा निर्जीवतया नैष्फल्यम्, यदुक्तं तन्त्रसद्भावे—

मन्त्राणां जीवभूता तु या स्मृता शक्तिरव्यया।
तया हीना वरारोहे! निष्फला शरदभ्रवत्॥

इति। स्पन्देऽपि—

तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम॥ (२ नि० १० का०)

इत्यादि। श्रीतन्त्रालोकेऽपि—

एतद्रूपपरामर्शमकृत्रिममनाविलम्।
अहमित्याहुरेषैव प्रकाशस्य प्रकाशता॥
एतद्वीर्यं हि सर्वेषां मन्त्राणां हृदयात्मकम्।
विनानेन जडास्ते स्युर्जीवा इव विना हृदा॥

इति। अथ च

परापरे इच्छा क्रियाशक्ती तदुभयमेलनात्
[1]एवमेतदिदं वस्तु नान्यथेति सुनिश्चितम्।
ज्ञापयन्ती जगत्यत्र ज्ञान शक्तिर्निगद्यते। (श्लो० ६, ७)

इति। मालिनी विजयोक्तनीत्यान्तरासूत्रितेच्छाक्रियात्मकतया परापराशब्दव्यपदेश्यां ज्ञानशक्तिस्वभावामित्यर्थः। यत्परामृष्टमभिनवगुप्तपादैः—

दीप्तज्योतिश्छटाप्लुष्टभेदबन्धत्रयं स्फुरत्।
स्ताज्ज्ञानशूलं सत्पक्षविपक्षोत्कर्तनक्षमम्॥

इति। परमपरं चेति द्विधा सामान्यं, तदुभयात्मकं तृतीयं परापराख्यं। ब्रह्मापि द्विविधं केवलशबलभेदात्परमपरमित्युच्यते। एतद्वै सत्य-

---

1. 'एवमेतदितिज्ञेयं' मु०पुस्तकेऽयंपाठः। (का०)

काम परमपरं चेति श्रुतेः ।(मैत्रा० ६-५)द्वे ब्रह्मणी वेदितव्ये परं चापरमेव चेति स्मृतेः । विद्या च द्विविधा परा चैवापरा चेति मुण्डकोपनिषत् । लिङ्गपुराणेऽपि—

द्वे ब्रह्मणी वेदितव्ये परा चैवापरा तथा ।
अपरा तत्र ऋग्वेदो यजुर्वेदो द्विजोत्तमाः ।।
सामवेदस्तथाथर्ववेदः सर्वार्थसाधकः ।
शिक्षा कल्पो व्यारणं निरुक्तं छन्द एव च ।।
ज्योतिषं चापराविद्या पराक्षरमिति स्थितम्
तदद्दश्यं तदग्राह्यमगोत्रं तदवर्णकम् ।

इत्यादि । परोऽपरश्च द्विधा प्रणवः । यदुक्तं स्कान्दे—

परापरविभागेन प्रणवो द्विविधो मतः ।
परः परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।।
प्रकर्षेण नवं यस्मात्परं ब्रह्म स्वभावतः ।
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ।
परमप्रणवप्राप्ति हेतुत्वात्प्रणवोऽथवा ।।

इति । वेदार्थोऽपि द्विधा परोऽपरश्चेति । तदुक्तं तत्रैव—

परापरविभागेन वेदार्थोऽपि द्विधा स्मृतः ।
वेदार्थस्तु परः साक्षात्परात्परतरं परम् ।।
अपरो धर्मसंज्ञः स्यात्तत्परप्राप्तिसाधनम् ।

इति । परमपरं परापरं चेति त्रिधा ज्ञानम् तदुक्तं योगशास्त्रे—

ज्ञानं तत् त्रिविधं ज्ञेयं परापरविभेदतः ।
तत्राद्यं परमं ज्ञानं पशुपाशात्मदर्शनम् ।।
द्वितीयमपरज्ञानं केवलं पाशदर्शनम् ।
यथा दृष्टयन्तरं रात्रौ नरमार्जारनेत्रयोः ।।

तथा विलक्षणं ज्ञानं परापरमुदीरितम् ॥

इति। मन्त्रपारायणान्तर्गतो मन्त्रविशेषोऽपि परापराख्य इत्यग्रे निरूपयिष्यते। देव्यपि परापराख्या। तदुक्तं वराहपुराणे—

तत्र सृष्टिः परा प्रोक्ता श्वेतवर्णस्वरूपिणी।
या वैष्णवी विशालाक्षी रक्तवर्णस्वरूपिणी॥
अपरा सा समाख्याता रौद्री चैव परापरा।

इति, एवं परापरादिलक्षणा पूजा तथा वागवस्थाहोमादयोऽन्येप्यर्थाः यथालाभं योज्याः। एवमुक्तलक्षणा पूजाविधौ परापरमयार्चनेति कर्तव्यतात्मक्रमे क्षीराज्यमध्वासवैर्वर्णानुक्रमविहितैर्दुग्धादिभिः सन्तर्प्य तत्संस्कृतगन्धाक्षतपुष्पोपेतविशेषार्घ्यबिन्दुसमर्पणेन संप्रीय (तत्र क्रमो,–ब्राह्मणः क्षीरेण, क्षत्रिय आज्येन, वैश्यो मधुना, शूद्र आसवेन सन्तर्पयेदिति)। तेषां विप्रादीनां स्थिरा त्वद्भजने निश्चला धीर्बुद्धिर्येषामनन्यमनस्कानां मनश्चेतो यां यां भोगमोक्षतदुभयात्मिकामैहिकीमामुष्मिकीं वा सिद्धिं फलनिष्पत्तिमिति यावत् प्रार्थयते समुपयाचते, तां तां सिद्धिं तरसा जवेनाचिराय ध्रुवमेवाप्नुवन्ति आसादयन्ति। एवो भिन्नक्रमः तदुक्तं पाद्मे—

'चण्डिकां स्नपयेद्यस्तु ऐक्षवेण रसेन च।
सौपर्णेन सयानेन विष्णुना सह मोदते'॥

इत्युक्तेः, लोकान्तरविहरणादिकमप्येतत्पूजादिना सिद्ध्यति। अन्यत्रापि—

'यत्रास्ति भोगो न च तत्र मोक्षो
यत्रास्ति मोक्षो न च तत्र भोगः
श्रीशङ्करीतर्पणतत्पराणां
भोगश्च मोक्षश्च करस्थ एव'॥

इति। चतुर्वर्गप्राप्तयेऽपि देव्यर्चनस्य विहितत्वात्तत्पूजा चतुर्वर्गफल-

प्रदायिनी । यदुक्तं पाद्मे पुष्करखण्डे आह्निकप्रकरणे—

'अतः परं च देवानामर्चनं कारयेद्बुधः ।
गणेशं पूजयेद्यस्तु विघ्नस्तस्य न बाधते ।।
आरोग्यार्थेऽर्चयेत्सूर्यं धर्ममोक्षाय माधवम् ।
शिवं धर्मार्थमोक्षाय चतुर्वर्गाय चण्डिकाम्' ।।

इति । यद्वा सिद्धिं चक्रेश्वरत्वादिरूपामिति । तदुक्तं शिवसूत्रेषु—
'शुद्धविद्योदयाच्चक्रेशत्वसिद्धिरिति' । (१-२१)
वार्तिकेऽपि—

यदा परिमितां सिद्धिमनिच्छन्पुनरिच्छति ।
विश्वात्मवत्प्रथारूपां परां सिद्धिं तदाऽस्य तु ।।
शुद्धविद्योदयाच्चक्रराजत्वं सिद्धिमृच्छति ।
वैश्वात्म्यप्रथनाकांक्षी सन्धत्ते शक्तिमात्मनः ।।
यदा योगी तदा तस्य सदाशिवपदस्पृशः ।
ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः ।।
सामानाधिकरण्यं च सद्विद्याहमिदंधियोः ।
इति नीत्या जगत्सर्वमहमेवेति या मतिः ।।
सा शुद्धा निर्मला विद्या तदीयादुदयात् स्फुटात् ।
उन्मज्जनात्मविच्छक्तिमात्मनो नित्यमामृशेत् ।।
यदा योगी तदा तस्य चक्रेशत्वमनुत्तरम् ।
माहेश्वर्याः सामवेशोत्कर्षात् सिद्ध्यति योगिनः ।।

इति, ते कीदृशा विघ्नैरविग्नीकृताः विघ्नन्ति कार्यसिद्धिं विलुम्पन्तीति विघ्ना आध्यात्मिकादयस्त्रिविधोपयातास्तदधिष्ठातृदेवताविशेषाश्च तैरविग्नीकृता अनुद्वेजिताः । अथ च सप्तकोटिसंख्यहेरम्बसेनाधीश्वरैरामोदप्रमोदादिभिः षड्भिर्विघ्ननायकैरपि ते श्रीदेवीभक्तत्वादविग्नीकृताअविहन्यमानाभीष्टार्थसिद्धयस्तपूजाफलं विघ्नैर्नविलुप्यते इत्यर्थः । एतदाशयेनैव जायन्तीयनिमि संवादेप्युक्तम्—

त्वां सेवतां सुरकृता बहवोऽन्तराया:
स्वौको विलङ्घ्य परमं व्रजतां पदे ते ।
नान्यस्य बर्हिषि बलीन्ददतः स्वभागान्
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ (११-४-१०)[1]

तथान्यत्र—

तथा न ते माधव ! तावकाः क्वचिद्
भ्रश्यन्ति मार्गात् त्वयि बद्धसौहृदः ।
त्वयाभिगुप्ता विचरन्ति निर्भया
विनायकानीकपमूर्धसु प्रभो ! ॥ (१० पू० २-३३)[1]

अत्र श्रीपरदेवतार्चनायामुक्तद्रव्याणां क्षीरादीनां वर्णानुक्रमेणोक्ति कृतयुगक्रमोचितामेवाचार्यो निर्दिष्टवान् । युगान्तरेष्वनुकल्पविधीनां सर्ववर्णसाधारणतया रुद्रयामलादिशास्त्रेऽभिहितत्वादिति बोध्यम् । तदुक्तं तत्र—

सत्यक्रमे चतुर्वर्णैः क्षीराज्यमधुपिष्टकैः ।
त्रेतायां पूजयेद्देवीं घृतेन सर्वजातिभिः ॥
मधुभिः सर्ववर्णैश्च पूजयेद् द्वापरे युगे ।
पूजनीया कलौ देवी केवलैरासवैश्च तैः ॥

इत्येतेन कलावासवस्य सत्यक्रमोक्तचतुर्थवर्णविहितप्रधानकल्पत्वेऽपि सर्ववर्णैरनुकल्पविध्यन्तर्भाव एवाश्रयणीयः । तत्रापि ब्राह्मणविषये निषिद्धत्वात्तद्यथा—

गुडार्द्रकरसेनैव सुरा न ब्राह्मणस्य च ।
गौडी तु या क्षत्रियेण माध्वी वैश्येन तत्र वै ॥
कदलीमधुसंमिश्रशालित्वक् केवलैः सुरा ।
सर्वा शूद्रस्य संप्रोक्ता यत्र वा तद्भविर्भवेत् ॥

1. कुत उद्धृतमिति नोपलभ्यते ।

अत्र गौडी माध्वीति विशेषोक्तिः कामनापरत्वेन। तथा—

नारिकेलोदकं कांस्ये ताम्रे दद्यात्तथा मधु।
दधिदुग्धं तथा ताम्रे गुडमिश्रं तथा दधि॥
गुडार्द्रकमथो वापि पूजनार्थं प्रकल्पयेत्॥

इत्याद्यनुकल्पवचनानि। तथा द्रव्याणमपि तत्तत्पात्रादिसंयोगेन तादवस्थ्यसद्भावे प्रधानतुल्यत्वेन विप्रेषु निषेधदर्शनाद्—

'ब्राह्मणो न सुरां पिबेन्न मांसमश्नीयादि'ति। 'नित्यं मद्यं ब्राह्मणो वर्जये'दित्यादि श्रुतेः। नित्यपदं कामतोऽकामतोऽपि प्राप्तौ निषेधं बोधयति। स्मृतिश्च:—

'ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः।
जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम्'॥

इति। भैरवीतन्त्रे—

'ब्रह्मणो मदिरां दत्त्वा ब्राह्मण्यादेव हीयते।
स्वगात्ररुधिरं दत्त्वा स्वात्महत्यामवाप्नुयात्'॥

क्रमसंहितायामपि—

'आवाभ्यां पिशितं रक्तं सुरां वापि सुरेश्वरि।
वर्णाश्रमोचितं धर्ममविचार्यार्पयन्ति ये॥
भूतप्रेतपिशाचास्ते भवन्ति ब्रह्मराक्षसाः'।

इति, अपि च—

'द्रव्येण सात्त्विकेनैव ब्राह्मणः पूजयेच्छिवाम्। इति।
सात्त्विकेनैव भावेन ब्राह्मणस्तर्पयेच्छिवाम्॥

इति च।

एवं दद्यात्क्षत्रियोऽपि पैष्टिकीं न कदाचन।
नारिकेलोदकं कांस्ये ताम्रे दद्यात्तथा मधु॥

राजन्यवैश्ययोर्दानं न द्विजस्य कदाचन ।
एवं प्रदानमात्रेण हीनायुर्ब्राह्मणो भवेत्' ॥

इति । आवश्यके काम्यादौ कर्मण्यपि ब्राह्मणेनानुकल्पविधिरेव ग्राह्यः । यथोक्तं भैरवीतन्त्रे—

यत्रावश्यं विनिर्दिष्टं मदिरादानपूजनम् ।
ब्राह्मणस्ताम्रपात्रे तु मधुमद्यं प्रकल्पयेत् ॥

इति । कौलागमोक्तवस्तुविचारस्तु यथा—'कुलागमक्रमेणैव पूजयेत्परमेश्वरीमि'ति सर्वतन्त्रस्वारस्येन कुलद्रव्यैरेव विधीयमानायां कुलदेवीपूजायां सौत्रामण्यादिक्रतुष्विव संस्कृतकुलद्रव्योपयोगस्य विहितत्वान्नाधर्मसाधनत्वं प्रतीयते, वक्ष्यमाणागमस्मृत्यनुमितवेदमूलकत्वाच्च । उक्तश्रुतिवाक्यानां त्वदीक्षितविषयपरतया समाधेयं, न ब्राह्मणमात्रं तद्विषयः । अत एव सौत्रामणीप्रकरणश्रुतिः—'ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातार'मिति । तस्मात्तदुपयोगोऽप्यधिकार्यनधिकारिभेदेनागमेषु विधीयमानो निषिध्यमानश्च क्वचित्प्रतिप्रसवास्पदतां च भजते । तदुक्तं कुलार्णवे—

शैवे [1]च वैष्णवे शाक्ते सौरे सुगतदर्शने ।
बौद्धे पाशुपते सांख्ये मान्त्रे[2] का[3]लामुखे तथा ॥
[4]दक्षिणे वामसिद्धान्ते वैदिकादिषु पार्वति ।
विनालिपिशिताभ्यां [5]च पूजनं निष्फलं भवेत् ॥
कुलद्रव्यैर्विना कुर्याज्ज[6]पं पूजां व्रतं तपः ।
निष्फलं तद्भवेद्देवि ! [7]भस्मन्येव यथा हुतम् ॥
यथा क्रतुषु विप्राणां सोमपानमदूषितम् ।
[9]अलिपानं तथा देवि ! सोमवद्भोगमोक्षदम् ॥ (उ० ५ श्लो० ६७-७०)

---

1. वा 2. व्रते 3. कुलमुखे 4. सदक्ष 5. भ्यान्तु कूल 6. जपयज्ञतपोव्रतम् 7. भस्मनीव 8. विधीयते 9. मद्यपानं तथा कार्य्यं समये भोगमोक्षदम् (आर्थर एवलान)

इति, तथा—

निशङ्को निर्भयो वीरो निर्लज्जो निष्कुतूहलः ।
निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेत् ।।
तत्कर्म कुर्वतां पुंसां कर्मलोपो भवेद्यदि ।
तत्कथं तत्प्रकुर्वन्ति सप्तकोटिमुनीश्वराः ।।

इत्यादिशास्त्रवचनैर्दीक्षादिसंस्कारसंस्कृतेष्वधिकारिषु द्रव्योपयोगविधानात् । तथाचर्ग्वेदीयसांख्यायनशखायां श्रीसुन्दरीवरिवस्याद्वारा बिन्दुतर्पणेन साम्राज्यप्राप्तिः श्रूयते ।

'इमां[1] विज्ञाय सुरया मदन्ति परिस्रुता तर्पयन्तः स्वपीठम् ।
नाकस्य पृष्टे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति' ।। (त्रिपुरा० ७)

इति । दीक्षा संस्कारसमयाचारादिर्वजितानां निन्द्यमानत्वेन तु शतशो वचनानि निषेधपराण्याम्नायन्ते । तदुक्तं तत्रैव:—

[2]आवृतीर्गुरुपंक्तिश्च वटुकादीन्प्रपूज्य च ।
वीरोप्यत्र वृथा पाना[3]द्देवताशापमाप्नुयात् ।।
अयष्ट्वा भैरवं देवमकृत्वा मन्त्रतर्पणम् ।
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् ।।
अज्ञात्वा कौलिकाचारमयष्ट्वा गुरुपादुकाम् ।
योऽस्मिन्न शास्त्रे प्रवर्तेत तं त्वं पीड[4]यसे ध्रुवम् ।।
कौलज्ञाने त्व[5]सिद्धो यस्तद् द्रव्यं भोक्तुमिच्छति ।
स महापातकी देवि[6] ! सर्वधर्मबहिष्कृतः ।।

---

1. इमां विज्ञाय सुधिया मदन्ती
परिस्रुता तर्पयतः स्वपीठम् । इति (उ०वा०को०)

2. आवृतिं; 3. पानी; 4. पीडयसि; 5. ह्यसिद्धो; 6. ज्ञेयः ।

समयाचारहीनस्य स्वैरवृत्तेर्दुरात्मनः ।
न सिद्धयः कुलभ्रंशस्तत्सर्वं[1] नरकाय च ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः[2] ॥
[3]न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ।
स्वेच्छया [4]वर्तमानो यो दीक्षासंस्कारवर्जितः ॥
न तस्य सद्गतिः क्वापि तपस्तीर्थव्रतादिषु[5] ।
असंस्कृतं [6]पिबन्मद्यं बलात्कारेण मैथुनम् ॥
[7]स्वप्रीत्यै आहृतं[8] मांसं रौरवं नरकं व्रजेत् ॥ (कुलार्णव, उ० ५ श्लो० ९२-९९)

इत्यादिनानधिकारिणां तदुपयोगनिषेधात् । कुत्रचित्तु संस्कृतपूजाविशेषद्रव्यपरतया प्रतिप्रसवेऽपि श्रूयते । तदुक्तम्—

क्वचिद्यदृच्छया प्राप्तमलिद्रव्यं तु भक्तितः ।
गृहीत्वा मूलमन्त्रेण गुरुं स्मृत्वा च पादुकाम् ॥
तत्त्वत्रयेण संयुक्तं गृह्णीयान्मूलमुच्चरन् ।

इत्यादि । यद्वा कलिक्रमानुसारेणापि प्रोक्तानुकल्पद्रव्याणां सुरासाम्याद् ब्राह्मणविषये निषिद्धत्वात्काम्यादिकर्मण्यपि बिन्दुचक्रतर्पणं क्षीरेण कल्प्यमिति निष्कर्षाशयं प्रमाणोपोद्बलितं गृहीत्वाचार्य इमं क्रमं निबबन्ध । तदुक्तम्—

'ब्राह्मणस्य सदाऽपेयेति' । अत्राकारप्रश्लेषेणापेयत्वं सार्वदिकमवगमयति । 'महाकालसंहितायामपि'—

क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवंशजैः ।
माक्षिकैर्वैश्यवर्णैस्तु आसवैः शूद्रजातिभिः ॥

---

1. तत्संसर्गं न कारयेत् 2. कामकारतः 3. स सिद्धिमिह नाप्नोति न सुखं न परांगतिम् 4. रममाणो 5. दिभिः 6. पिबेद्द्रव्यं 7. स्वप्रियेण 8. हृतमिति पाठान्तराणि (आर्थर एवलान)

इत्यत्रापि ब्राह्मणैरित्युक्त्या कृतेऽपि जात्युद्धारसंस्कारे अत्यक्तप्राग्जात्याग्रहैरित्यभिधीयते। ये तु दुस्तरं जात्यभिनिवेशसागरमुत्तीर्णास्तेषां कौलाचारपारदृश्वनामनुत्तराचारसोपान एव पदक्रमबन्धः सर्वाचारोत्तीर्णतया विलसन् स्वेच्छां नातिक्रामतीत्यलमतिपल्लवितेन। तदत्रापि साधकानां रुचिबुद्धिशक्तिसम्भवानतिक्रम्यैव द्रव्यग्रहणं रम्यतरमिति ॥१४॥

इदानीं परापरमय्या देव्याः पश्यन्त्यादिवाक्प्रसरक्रमेण शब्दसृष्टिप्रकारं निरूपयंस्तदविनाभावेनार्थसृष्टेरप्युदयविलयास्पदत्वनिर्वचनेन तस्याः परावाक्शक्तिरूपत्वमाह—

शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति स्फुटम्।
लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी
सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिःपरा गीयसे ॥१५॥

हे देवीति सम्बोधनमनुवर्तनीयम्। देवी पदार्थस्तु प्राग्वदेव। यतस्त्वं शब्दानां लौकिकालौकिकात्मनानन्तवैचित्र्यभेदितानां वर्णपदमन्त्रात्मवाचकानां जननी परावाङ्मूलभूमिकातःक्रमेण विस्फारयन्ती ज्येष्ठारौद्रचम्बाख्यशक्तिप्रसरसंभेदवैचित्र्यतो मायीयामायीयाद्यक्षान्तपञ्चाशद्वर्णपरामर्शात्मनोल्लास्यवर्णसंयोजनास्वरूपाशेषशब्दप्रपञ्चस्य तदविनाभूतव्याप्तिकस्य वाच्यात्मनोऽर्थप्रपञ्चस्यापि प्रसरोपपत्तेः परामातृकात्मेत्यर्थः। तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत इति श्रुतेः (बृह० १-४-७)। नामरूपात्मकस्य वाच्यवाचकात्मनो जगत आविर्भावः श्रूयते। उक्तं च—

'न विद्या मातृका परा'

इति। 'श्रीतन्त्रसद्भावे'ऽपि—

'सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये।

शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥
या सा तु मातृका देवि ! परतेजः समन्विता ।
तया व्याप्तमिदं विश्वं सब्रह्मभुवनात्मकम् ॥
तत्रस्थं च यदा देवि ! व्यापितं च सुरार्चिते ।
अवर्णस्थो यथावर्णः स्थितः सर्वगतः प्रिये ॥
तथाहं कथयिष्यामि निर्णयार्थं स्फुटं तव ।'

इत्यारभ्य—

'या सा शक्तिः परासूक्ष्मा निराचारेति कीर्तिता ।
हृद्बिन्दुं वेष्टयित्वा तु सुषुप्तभुजगाकृतिः ॥
तत्र सुप्ता महाभागे न किञ्चिन्मन्यते उमे ! ।
चन्द्राग्निरविनक्षत्रैर्भुवनानि चतुर्दश ॥
क्षिप्त्वोदरे तु या देवी विषमूढेव सा गता ।
प्रबुद्धा सा निनादेन परेण ज्ञानरूपिणा ॥
मथिता चोदरस्थेन बिन्दुना वरवर्णिनि ।
तावद्वै भ्रमवेगेन मथनं शक्तिविग्रहे ॥
भेदात्तु प्रथमोत्पन्ना बिन्दवस्तेऽतिवर्चसः ।
उत्थिता तु यदा तेन कलासूक्ष्मा तु कुण्डली ॥
चतुष्कलमयो बिन्दुः शक्तेरुदरगः प्रभुः ।
मथ्यमन्थनयोगेन ऋजुत्वं जायते प्रिये ॥
ज्येष्ठाशक्तिः स्मृता सा तु बिन्दुद्वयसुमध्यगा ।
बिन्दुना क्षोभमायाता रेखैवामृतकुण्डली ॥
रेखिणीनाम सा ज्ञेया उभौ बिन्दू यदन्तगौ ।
त्रिपथा सा समाख्याता रौद्री नाम्ना तु गीयते ॥
रोधिनी वा समुद्दिष्टा मोक्षमार्गनिरोधनात् ।
शशाङ्कशकलाकारा अम्बिका चार्धचन्द्रिका ॥
एकैवेत्थं पराशक्तिस्त्रिधा सा तु प्रजायते ।
आभ्यो युक्तवियुक्ताभ्यः सञ्जातो नववर्गकः ॥
नवधा तु स्मृता सा तु नववर्गोपलक्षिता ।

पञ्चमन्त्रगता देवि ! सद्य आदिरनुक्रमात् ।।
तेन पञ्चविधा प्रोक्ता ज्ञातव्या सुरनायिके ।
स्वरद्वादशगा देवि ! द्वादशस्था उदाहृता ।।
अकारादिक्षकारान्ता स्थिता पञ्चाशता भिदा ।
हृत्स्था एकार्णवा प्रोक्ता कण्ठे प्रोक्ता द्वितीयका ।।
त्रिरार्णवा तु ज्ञातव्या जिह्वामूले सदा स्थिता ।
जिह्वाग्रे वर्णनिष्पत्तिर्भवत्यत्र न संशयः ।।
एवं शब्दस्य निष्पत्तिः शब्दव्याप्तं चराचरम् ।'

इति । 'कामकलाविसासे'ऽपि—

'सितशोणबिन्दुयुगलं विविक्तशिवशक्तिसंकुचत्प्रसरम् ।
वागर्थसृष्टिहेतुः परस्परानुप्रविष्टविस्पष्टम् ।। (६)'

इति । एवं पराशक्तिरूपा मातृका वाच्यवाचकात्मषडध्वस्फारमय-विश्वजननी । अतोऽत्र भुवने त्रिविष्टपे भुवनाध्वाख्ये भवादिरूपा वा वाग्वादिनीति त्वं गीयसे स्तूयसे । वाचः पश्यन्ती मध्यमा वैखरीरूपा वदितुं वादयितुं वा शीलमस्या इति वाग्वादिनी ।

'सर्वेषां च स्वभक्तानां वादरूपेण सर्वदा ।
स्थितत्वाद्वाचो विख्याता लोके वाग्वादिनी सा' ।।

इति । त्रिपुरासिद्धान्तोक्तेः परवागारवस्यैवोर्ध्वोर्ध्वस्थानाश्रयेण पश्यन्त्याद्यभिधाप्रसिद्धिः । यथा 'नित्यातन्त्रे'—

'मूलाधारैः समुत्पन्नः पराख्यो नादसम्भवः ।
स एवोर्ध्वतया नीतः स्वाधिष्ठाने विजृम्भितः ।।
पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः शनैः ।
अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः ।।
तथा तयोर्ध्वंनुन्नः सन्विशुद्धौ कण्ठदेशतः ।
वैखर्याख्य...................... ।।'

इति। एतत्प्रागपि वाङ्मयत्वनिरूपणावसरे वितानितम्। एवं शब्दविवर्तत्वादर्थानामपि त्रिविधवाच्यात्मनां समुत्पादिका। यदाहुः—

'अनादिनिधनं ब्रह्म शब्द तत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥' (वा॰ प॰ १-१)

इति। एतेन नामरूपात्मकस्य जगतो ब्रह्मपरिणामकत्वं तान्त्रिका अभ्युपागमन्नित्युपक्षिप्तम्। तेषां मते प्रपञ्चस्य सत्यत्वमेव। ब्रह्मप्रपञ्चयोर्दृग्घटयोरिवात्यन्ताभेदप्रतीत्या ब्रह्मणः सत्यत्वे प्रपञ्चस्यापि सत्यत्वावश्यम्भावसद्भावात् केवलं भेदाभ्यासं मिथ्यात्वाभ्युपगमान्निरसितुं 'नेह नानास्ति किञ्चन' इति।

'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः'। इति।
'सर्वं खल्विदमेवाहं, नान्यदस्ति सनातनम्'।

इति। 'यत्र त्रिसर्गो मृषा' इत्यादीनां श्रुतिस्मृत्युक्तानामखिलानामद्वैतवाक्यानां निर्वाहः। तावन्मात्रेणैवाविरोधे प्रपञ्चमिथ्यात्वकल्पनस्य तु वेदान्तिनामनर्थकत्वादिति शाम्भवानन्दकल्पलतायां विस्तरेण प्रपञ्चितम्। अथ च—वाग्वादिनी इति, मन्त्रविशेषः स चाग्रे मन्त्रपारायणविवरणे वक्ष्यते।

यद्वा प्रतीकमात्रग्रहणोपलक्षितत्वाद्वागीश्वरीनामकः सरस्वतीमन्त्रविशेषस्तद्रूपा, सोऽपि सिद्धमन्त्रिणो गिरा वाचस्पतिसाम्यमुत्पादयति। उद्धारो यथा—

'तारो हृल्लोहितः सत्यो वैकुण्ठानन्तसंयुतः।
भृगुर्ने शब्दरूपे वाङ्मायाकामो वदद्वयम् ॥
वाग्वादिन्यग्निकान्तान्तो मन्त्रो वेदाक्षिवर्णवान्।
अनेन मनुना पूर्वपत्रे वागीश्वरीं यजेत् ॥'

स्पष्टम्—

'ॐ नमः पद्मासने शब्दरूपे ऐं ह्रीं क्लीं वद वद वाग्वादिनि स्वाहा'

इति । एवमचिद्राशिविषयसृष्टिकारित्वमुक्त्वा चिद्राशिमध्येऽधर-प्रपञ्चोत्पादनादिकारणभूतब्रह्मादिविषयसृष्टिसंहारकारित्वेन परस्याः शक्तेः पूर्णैश्वर्यं प्रथयन्नाह—त्वत्त इति । तेऽप्यमी जगत्सृष्टृत्वादिनाग-मप्रसिद्धाः । प्रत्यक्षानवगमाद्विप्रकर्षव्यपदेशार्हा इत्यदसा निर्देशः । ब्र-ह्मादिः प्रथमो येषां ते केशववासवप्रभृतयोऽपि केशवो विष्णुः, वसुर-ग्निर्ललाटनेत्रत्वेनास्त्यस्य स वासवो रुद्रः । ज्योत्स्नादित्वादण् । वासव इन्द्रस्तदुपलक्षिता दश दिक्पाला वा, 'इन्द्रं या देवी सुभगा जजानेति' श्रुतेः । प्रभृतिग्रहणेनेश्वरसदाशिवौ गृह्येते, तेन ब्रह्मविष्णुरुद्रेश्वरसदा-शिवाः पञ्चब्रह्माभिधाः स्फुटं व्यक्तं त्वत्तः पञ्चस्रोतः प्रसरमूलभूतायाः सकाशाद् बीजादङ्कुरा इव शक्त्यां महासृष्टावप्याविर्भवन्ति समुत्पद्यन्ते इति संभाव्यते । अपिः सम्भावनायाम् । तदुक्तं मार्कण्डेये—

'येऽर्था नित्या ये विनश्यन्ति चान्ये
येऽर्थाः स्थूला ये च सूक्ष्माच्च सूक्ष्माः ।
यच्चामूर्तं यच्च मूर्तं समस्तं
यद्यद्भूतेष्वेकमेकं च किञ्चित् ॥
येऽर्था भूमौ येऽन्तरिक्षेऽन्यतो वा
तेषां देवि ! त्वत्त एवोपलब्धिः ॥'

इति विस्मयार्थे वा । तदुक्तं देवीपुराणे—

'ब्रह्माद्याः स्थावरान्ताश्च यस्या एव समुद्गताः ।
महदादिविशेषान्तं जगद्यस्याः समुद्गतम् ॥'

इति । तथा कल्पविरमे स्वस्वायुष्कालपरिमाणविरतौ यत्र त्वयि मूलकारणे खलु लीयन्ते, मृदीव घटादयो लीना भवन्ति । बीजवत्तदा-नीमपि सूक्ष्मात्मना सर्वमिदमस्त्येव तदेव पुनः सृष्टिकाले विसृज्यते तदुक्तम्—

'कवलीकृतनिःशेषतत्त्वग्रामस्वरूपिणी ।'

इति । तथा—

'यथान्यग्रोध बीजस्थः शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं विश्वमेतच्चराचरम् ॥' (प० त्री० २४)

इति । कल्पशब्देनात्र महाप्रलय उच्यते नावान्तरः । तत्र क्रमशः स्वस्वोर्ध्वकारणलये तद्दिवसारम्भे तदधरवर्तिकारणानां पुनः सहस्रशः प्रलयोल्लाससम्भवादव्यवधानेन शक्तौ लयाभावः । अतः कल्पविरमे सदाशिवायुष्कालनिवृत्तावित्यर्थः । खलुर्वाक्यालङ्कारे । एतेन ब्रह्मादीनाममरत्वप्रथाप्यौपचारिकी मनुष्यायुष्कालपरिमित्यपेक्षया जीवितत्वस्य दैर्ध्याभासादिति ध्वन्यते । जगज्जन्मादिकृत्यकारिणोऽपि ब्रह्मादयः स्वविलयोदययोरस्वतन्त्रत्वात् स्वतन्त्रशक्त्येकशरणतां तस्या अचिन्त्यैश्वर्यनिर्भरतां च ख्यापयन्तीत्यपिना द्योत्यते । तदुक्तम् शक्तिसूत्रेषु—

'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः ।' (प्र०हृ० १)

इति । स्वातन्त्र्यादेवास्या अनन्यमुखप्रेक्षित्वलक्षणं परत्वमस्ति, अस्वतन्त्रस्य तदभावात्कार्यसम्पादनानुपपत्तेरुपादानादिकारणापेक्षणात् । तदपेक्षायां स्वातन्त्र्यविघातः प्रसज्येत, सा च शक्तिः विश्वकारणत्वेन सर्वागमेषु गीयते । क्षित्यादेः प्रपञ्चस्य कार्यत्वेनाभिमतस्य कारणमन्तरेण तदनुत्पादानात् । क्षित्यादेः सकर्तृत्वं कार्यतयैवानुमीयते इति हि न्यायविदः । औपनिषदानामप्ययमेव पन्थाः । यदाहुः—

'निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाग्निशक्तिवत् ।
नहि शक्तिं क्वचित्कश्चिद् बुध्यते कार्यतः पुरा ॥'

इति । एवमर्थप्रतिपादनाशयेनाह—सा त्वमिति उक्तविशेषणलक्षिता काचिदिति मनो वागगोचरा 'यतो वाचो निवर्तन्ते' इति श्रुतेः । परानपेक्षित्वेन नियतदेशकालाकारावच्छेदविरहात् तत्तद्वैचित्र्योल्लासकत्वाच्च नियताकृत्यादिनानिर्वाच्या । तथाखिलशक्त्यन्तरक्रोडी-

कारेण पूर्णतया मुख्या पारमेश्वरी परा शक्तिः स्वातन्त्र्याख्येतिसद्भिः श्रीकण्ठादिभिर्गीयसे। तदुक्तम्—

'तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसोविधिः।'

इति। एतेन नित्या विभुर्विश्वाकारा इत्याद्याक्षिप्तं भवति। यद्वा तिसृभ्यः पश्यन्त्यादिभ्यः परत्वात्परा

'श्री परानन्दनाथस्य प्रसन्नत्वात्परेति सा।
परानन्दाभिधे तन्त्रे प्रसिद्धत्वाच्च सा परा॥
प्रासादरूपिणी चेति परा सा शाम्भवी परा।'

इति। निरुक्त्यन्तरोक्ता वा। तदुक्तम्—

'अनपेक्षस्य वशिनो देशकालाकृतिक्रमाः।
नियतानेति स विभुर्नित्यो विश्वाकृतिः शिवः॥
विभुत्वात्सर्वगो नित्यभावादाद्यन्तवर्जितः।
विश्वाकृतित्वाच्चिदचित्तद्वैचित्र्यावभासकः॥'

इति। श्रुतिरपि—

'न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च॥'

इति। कीदृशी अचिन्त्यरूपमहिमा। अचिन्त्यो रूपस्य चिदानन्दघनस्वभावस्य महिमा महत्वं यस्याः सा 'महत्तरा महिमा देवतानामिति श्रुतेः' मानुष्यानन्दाद्यपेक्षया च ब्रह्मानन्दस्यानवच्छिन्नतया श्रुतौ प्रसिद्धत्वात्। अन्यत्रापि—

'आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते।
परापरात्परं तत्त्वं सैषा देवी निगद्यते॥
तत्सारं तच्च हृदयं स विसर्गः परः प्रभुः।'

इति । अथचेना विष्णुना चिन्त्यः स्मार्यो रूपस्य सगुणस्य ललितानाम्नो महिमा वैभवं देवकार्यार्थं भण्डासुर–तत्परिच्छदवधादि यस्याः, तद्वधार्थं स्वात्मनोऽनेकशक्तिव्यूहनिर्माणं वा । पराशक्तेः स्वरूपं तु शिवसामरस्यात्मकं । तदुक्तं 'वायुसंहितायाम्'—

'शिवेच्छया पराशक्तिः शिवतत्त्वैकतां गता ।
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव ॥'

इति । 'सौरसंहितायामपि'—

'ब्रह्मणोऽभिन्नशक्तिस्तु ब्रह्मैव खलु नापरा ।
तथा सति वृथा प्रोक्तं शक्तिरित्यविवेकिभिः ॥
शक्तिशक्तिमतोर्विद्वन् भेदाभेदस्तु दुर्घटः ।'

इति । 'वासिष्टेऽपि'—

'यथैकं पवनस्पन्दावेकमौष्ण्यानलौ यथा ।
चिन्मात्रं स्पन्दशक्तिश्च तथैवैकात्म सर्वदा ॥'

इति । जगदाविर्भावक्रमस्तु शैवागमे श्रीतन्त्रालोक–तत्सारादौ द्रष्टव्यः । इह विस्तरभयान्नोन्मील्यते । तद्विपरीत्येन लयक्रमः । वस्तुतः शिवतत्त्वादिक्षित्यन्तं चिदब्धेरयमूर्मिनिकरोल्लासः । तदुक्तम्—

'भूतानि तन्मात्रगणेन्द्रियाणि
मूलं पुमान् कञ्चुकयुक् सुशुद्धम् ।
विद्यादिशक्त्यन्तमियत्स्वसंवित्–
सिन्धोस्तरङ्गप्रसरप्रकारः'

इति ॥१५॥

एवं परतांशनिरूपणं विधाय परदेवताया अपरावस्थोद्भावनौचित्येनासाधारणस्य त्रिपुरेति नाम्नो निरुक्तिमाह—

देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा-
स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः ।

यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं
तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥१६॥

हे भगवति ! भूतानां विलयोदयादिकं या वेत्ति सा भगवती तत्संबुद्धिः । तदुक्तम् 'देवीभागवते'—

'उत्पत्तिं प्रलयं चैव भूतानां गतिमागतिम् ।
अविद्याविद्ययोस्तत्त्वं वेत्तीति भगवत्यसौ ॥'

इति । भगशब्दवाच्या ऐश्वर्यादयोऽर्थाः कात्स्न्र्येनसन्त्यस्यमिति कृत्वा वा भगवती । तदुक्तम् 'कालिकापुराणे'—

'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ॥'

इति । 'कोशेऽपि'—

'भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु ।
यशो वीर्यप्रयत्नेच्छाधर्मश्रीरविमुक्तिषु' ॥

इति । जगति षट्त्रिंशत्तत्त्वलक्षणे विश्वस्मिन् भवाभवादिसंज्ञके यत्किञ्चिद् वस्तु पदार्थस्वरूपं त्रिधा त्रिभिः प्रकारैर्नियमितं नियन्त्रितं कल्पितं नियतिशक्त्या संजातनियमं वा, तथा त्रिवर्गात्मकं समैस्त्रिभिरुपलक्षितसमूहात्मकं स्वतस्तस्य त्रिरूपत्वात्, तत्सर्वमशेषं ते तव त्रिपुरेति नामाख्यां तत्त्वतस्तस्य भावस्तत्त्वं तस्मान्नामगतत्रित्वार्थसामान्यादन्वेत्यनुयाति तेन सम्बध्नाति । त्रिवर्गादिकमिति पाठे त्वादिनानुलिखितानामप्यर्थानां ग्रहणं बोध्यम् । अत एवागमेषु त्रिभ्यः पुराभूतत्वादित्याद्यनेकधा निरुक्तय उक्ताः । यथा—त्रयाणां मातृमानमेयानां पुरं नगरं तदात्मिका, त्रीणि पुराणि जाग्रदाद्यवस्थारूपाणि यस्या इति, त्रीणि पुराणि ब्रह्मविष्णुरुद्रशरीराणि यस्या, त्रिभ्यः सूर्यादितेजोभ्यः, भूरादित्रिलोकेभ्यः, प्राणादित्रिवायुभ्यः, हृदयादित्रिस्थानेभ्यः सत्त्वादित्रिगुणेभ्यः, उडडीशनाथादित्रिसिद्धेभ्यः, दिव्यौघादित्रिगुरुभ्यः, आ-

त्मादित्रितत्त्वेभ्यः, कामराजादित्रिपीठेभ्यः, देवमार्गादित्रियानेभ्यः, कुलाकुलकौलाख्यत्रिविभागेभ्यः, मन्त्रमुद्रानिरीहाख्यत्रिरहस्येभ्यः, मूर्तिप्रकाशानन्दाख्यत्रिचक्रेभ्यः, शुक्लरक्तमिश्रत्रिबिन्दुभ्यो वा, तथा तिसृभ्य इच्छाशक्तिभ्यः, वामाज्येष्ठादिशक्तिभ्यः, कामेश्वर्यादिपीठशक्तिभ्यः, व्याहृतिभ्यः, इडादिनाडीभ्यः, स्थूलसूक्ष्मपरावस्थाभ्यः, सृष्टिस्थितिसंहृतिभ्यः, वा पुराभूतत्वात् प्रोक्तत्रिकात्मकस्य पूरकत्वात्तानि पुराणि यस्या इति वा कृत्वाशेषस्य त्रित्वविशिष्टस्य स्वसंविदात्मनि क्रोडीकारात् त्रिपुरेति निरुच्यते । तदुक्तमाचार्यपादैः 'प्रपञ्चसारे'—

'त्रिमूर्तिसर्गाच्च पुरोभवत्वात्
त्रयीमयत्वाच्च पुरैव देव्याः ।
लये त्रिलोक्या अपि पूरक[1]त्वात्
प्रायोऽम्बिकायास्त्रिपुरेति नाम ॥ (९ प० श्लो० २)'

'त्रिपुरार्णवे तु'—

'नाडीत्रयं तु त्रिपुरा सुषुम्ना पिङ्गला इडा ।
मनोबुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम् ॥
तत्र वसत्येषा तस्मात्तु त्रिपुरा मता ।'

इति । 'कालिकापुराणेऽपि'—

'त्रिकोणं मण्डलं चास्याः' इत्याद्युपक्रम्य
'सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मता' ।

इति । 'वामकेश्वरेऽपि'—

'त्रिपुरा त्रिविधा देवि[2] ब्रह्मविष्णवीशरूपिणी ।
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥
त्रैलोक्यं संसृजत्येषा[3] त्रिपुरा परि[4]कीर्त्यते' । (४ प० श्लो० ११-१२)

---

1. पूरणत्वात् 2. देवी 3. अस्मात् 4. परिकीर्तिता (का० सं० प्र०)

इति । 'वाराहे'ऽपि—

'ब्रह्मविष्णुमहेशाद्यैस्त्रिदशैरर्चिता पुरा ।
त्रिपुरेति तदा नाम कथितं देवतैस्तव ॥'

इत्यादि । एवमागमोक्तं विस्तरतस्त्रिकार्थमिहाचार्यस्त्रिपुरेतिपद निरुक्तिप्रदर्शनाय प्रतीकमात्रेणाह—देवानामित्यादि—देवाः प्रत्यक्षतस्तावदग्निवायुसूर्या इति नैरुक्ताः, वसुरुद्रादित्या भूरादिलोकाधिपाः, तथा सर्गस्थितिसंहारकारिणो ब्रह्मविष्णुरुद्रा इति पौराणिकाः । दीव्यन्ति द्योतयन्ति सबाह्याभ्यन्तरं विश्वमिति देवाः मनोबुद्ध्यहंकृतयस्तेषां त्रितयम् । तथा हुतभुजोऽग्नयस्ते च दक्षिणाग्निगार्हपत्याहवनीया इति तेषां त्रयी त्रेतासंज्ञका । अथ चावृत्त्या त्रयी त्रयो वेदाः 'स्त्रियामृग्सामयजुषी इति वेदास्त्रयस्त्रयी' (अ० को० १-६-३) इति कोशात् । 'कौर्मे'ऽपि'—

'ममैवान्या पराशक्तिर्वेदसंज्ञा पुरातनी ।
ऋग्यजुः सामरूपेण सर्गादौ संप्रवर्तते ॥'

इति । 'देवीपुराणेऽपि'—

'ऋग्यजुः सामभागेन साङ्गवेदगता यतः ।
त्रयीति पठ्यते लोके दृष्टादृष्टप्रसाधनी ॥'

इति । 'पाद्मेऽपि'—

'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च कथ्यसे'

इति । किं च त्रयी त्रयीमयी विद्या । तदुक्तं 'नित्यातन्त्रे'—

'अकारादिसामवेद ऋग्वेदश्च तदादिकः ।
यजुर्वेद इकारादिस्तेषां संयोगतः शुचिः ॥
तन्निष्पत्तिं शृणु प्राज्ञे ! प्रोक्ताः पूर्वापरक्रमात् ।
विलिख्य योजयेत्पूर्वं शब्दशास्त्रानुसारतः ॥
गुणसंध्या ऋग्यजुषां ततस्तेनापरं तथा ।

वृद्धिसंध्या समायुञ्ज्यादित्युत्पन्नं शुचेर्वपुः ॥
तेन त्रयीमयी विद्या कार्यकारणयोगतः ।'

इति । त्रयोऽवयवा यस्य संहतेः सा त्रयीति व्युत्पत्त्या त्रयीशब्दस्य बहवोऽर्था यथामति समूह्याः । तदेतेन त्रयीपदेनापि सर्वं त्रित्वविशिष्टं वस्तु स्वान्तः क्रोडीकृत्य स्थापितम् ।

यदुक्तं 'मार्कण्डेये'—

'त्रयो लोकास्त्रयो वेदास्त्रैविध्यं पावकत्रयम् ।
त्रीणि ज्योतींषि वर्गाश्च त्रयो धर्मादयस्तथा ॥
त्रयो गुणास्त्रयः शब्दास्त्रयो दोषास्तथाश्रमाः ।
त्रयः कालास्तथावस्थाः पितरोऽहर्निशादयः ॥
मात्रात्रयं च ते रूपं त्रिस्थे ! देवि ! सरस्वति ।'

इति । एवं त्रीतिपदोपक्षिप्यमाणाः कतिपयेऽर्था निर्दिष्टाः । तथा—शक्तित्रयं तिस्रः शक्तयो भारतीपृथ्वीरुद्राण्यः तदभिन्ना इच्छाज्ञानक्रियाः परापरा तदुभयात्मानो वा । त्रिस्वराःउदात्तानुदात्तस्वरिता ह्रस्वदीर्घप्लुता वा । त्रैलोक्यं त्रयोलोकाः भूर्भुवःस्वराख्याः, लोक्यते इति लोकः, लोक्यतेऽनेनेति लोकः, लोकयतीति च कृत्वा प्रमातृप्रमेयप्रमाणसंज्ञका वा । त्रिपदी सर्ववेदसारं गायत्रीछन्दः, 'गायत्री छन्दसामहमिति' स्मृतेः । सावित्र्याः पदत्रयं वा, विष्णोः क्रमत्रयं वा, 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्' (ऋ०मं०१-२२-१७)इति श्रुतेः । किंचाकथादिवर्णघटितपदत्रयं वा । त्रिपुष्करं—त्रीणि तीर्थानि भागीरथ्यादिनि । त्रयाणां देवर्षिपितॄणां पुषं पुष्टिं तृप्तिं करोतीति त्रिपुष्करमुपवीतम् । उपवीतिनैव हि देवादयस्तर्प्यन्ते, अनुपवीतिनोऽधिकाराभावादिति केचित् । त्रीणि पुष्कराण्यब्जान्यनाहताज्ञासहस्राराख्यानि वा । अथोऽनन्तरं त्रिब्रह्म त्रीणि ब्रह्माणि तत्त्वानि आत्मान्तरात्मपरमात्मसंज्ञकानि, त्रिरूपं ब्रह्म प्रणवो वा । प्रागुक्तावृत्तिपक्षानाश्रयणे तु त्रयो वेदा इत्यर्थान्तरं 'वेदस्तत्त्वं तपो ब्रह्म'ति कोशात् । गुणभेदेन त्रैधमापन्ना वा प्रकृतिस्त्रिब्रह्मपदेनाम्नाता । तथा त्रयो वर्णाः कुलसुन्दरीवि-

द्यागता: प्रणवगता वा, अनुत्तरेच्छोन्मेषात्मानो वा। तदुक्तं 'सिद्धातन्त्रे'—

'सात्र कुण्डलिनीबीजजीवभूताचिदात्मिका।
तज्जं ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः॥'

इति। वर्णाः स्वरव्यञ्जनव्यापकात्मानो वा, शुक्ललोहितकृष्णा विप्रक्षत्रियविशो वेति। तदेतावच्छ्लोकद्वयेन परदेवतायास्त्रिपुरसुन्दर्या वाच्यवाचकात्मकविश्वमयमपरं, तत्कारणत्वेन तदुभयातिक्रान्तं विश्वोत्तीर्णं परं च स्वरूपं स्वच्छस्वतन्त्रसदोदितमहामन्त्रवीर्यसारप्रकाशानन्दघनस्वसंविन्मयं प्रकाशितवानाचार्य इति॥१६॥

अथेयता प्रागुक्तग्रन्थेन श्रीविद्याबीजतद्देवतासेवाफलादि निरूप्येदानीं देव्या विभूतिविशेषरूपाणां फलानुरूपनामानि तत्तत्कार्यार्थिभिः स्मर्तव्यान्यभीष्टसिद्धिजनकभजनकालं च निर्दिशति—

लक्ष्मीं राजकुले जयां रणभुवि क्षेमङ्करीमध्वनि
क्रव्याद्द्विपसर्पभाजि शवरीं कान्तारदुर्गे गिरौ।
भूतप्रेतपिशाचजम्भकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे॥१७॥

हे भगवतीत्यामन्त्रणमनुषञ्जनीयम्। सिद्धलक्ष्म्यादयो बहवो विभूतिरूपाः सन्ति। अत्र तु लक्ष्मीशब्देन राज्यलक्ष्मीरेव ग्राह्या राजकुलेतिप्रकरणात्। तेन राजकुले राजभवनप्रवेशनादौ त्वां राज्यलक्ष्मीं स्मृत्वा तन्नामादिना ध्यात्वा विपदस्तरन्ति राजप्रसादासादितधनादिसम्पत्तौ दारिद्र्यान्मुच्यन्ते। अथ च तत्र पीड्यमानास्तद्दुःखान्मुक्ता भवन्ति। ध्यानस्य तु विद्याजपसाहित्यपुरःसरमुक्तत्वात्तद्विद्योद्धारो यथा कादिमते (३४ पटले)

'मातङ्गिन्या द्वितीयं च तृतीयं तदनन्तरम्।

रसाचरस्वैरम्बु स्याद्वाताग्नी तदनन्तरम् ॥
राज्यदे राज्यलक्ष्मीति हृन्मायाव्युत्क्रमात्त्रयम् ।
विद्यासौ राज्यलक्ष्म्यास्तु षोडशार्णा समीरिता ॥' (श्लो० ६६-६७)

स्पष्टम्—

ह्रीं श्रीं ब्लें अ इ राज्यदे राज्यलक्ष्मि सः ब्लें श्रीं ह्रीं इति ।

'ध्यात्वा तां विजयां विद्यां जपेन्नित्यं च पूजयेत् ।
राज्यं प्रयच्छति प्रीता साधकायाविलम्बितम् ॥'

इति । अत्र तां विजयामिति विजयासमानस्वरूपामित्यर्थः । तद्ध्यानं तत्रैव (१५ पटले)—

'पञ्चवक्त्रां दशभुजां प्रतिवक्त्रं त्रिलोचनाम् ।
भास्वन्मुकुटविन्यस्तचन्द्ररेखाविराजिताम् ॥
सर्वाभरणसंयुक्तां पीताम्बरसमुज्ज्वलाम् ।
उद्यद्भास्वद्बिम्बतुल्यदेहकान्तिं शुचिस्मिताम् ॥
शंखं पाशं खेटचापौ कल्हारं वामबाहुभिः ।
चक्रं तथाङ्कुशं खड्गं सायकं मातुलुङ्गकम् ॥
दधानां दक्षिणैर्हस्तैरिति ।'

रणभुवि समरक्षेत्रे प्रस्थिता रिपुसैन्यैरायोध्यमानत्वात्प्रबाध्यमाना जयां जयदुर्गाख्यां देवीं त्वां तन्नामादिना स्मृत्वा विपदः स्वपक्षविघातपराजयादिरूपास्तरन्ति रिपूञ्जयन्तीत्यर्थः । ॐ दुर्गे दुर्गे रक्षिणि स्वाहे'ति जयदुर्गाविद्या ।

ध्यानं यथा—

'कीलालाभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुखण्डां

शंखं चक्रं कृपाणं त्रिशिखमपिकरैरुद्वहन्तीं त्रिनेत्राम् ।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद् दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥'

इति । 'यद्वैतद्भिन्नैव जयाख्या देवी । अस्या मन्त्रो मायासप्ताक्षरीमध्यगतैतन्नामात्मकः । ध्यानं तु प्रागुक्तविजयाध्यानसदृशं तदावरणशक्तिमध्यावस्थितत्वात् । आवरणशक्तीनामपि मूलदेव्या समानाकारत्वादिकमाम्नातम् । तदुक्तं तत्रैव—

'शक्तयश्चापि पूजायां सुखासनसमन्विताः ।
सर्वा देव्या समाकारमुखपाण्यायुधान्यपि ॥'

इति । क्रव्याददिपसर्पभाज्यध्वनि क्रव्यादा आममांसभक्षिणो वृकव्याघ्रादयो द्विपा गजाः सर्पा भुजगास्तान् भजते इति तद्भाजि व्याघ्राद्युपप्लुतेऽरण्यादिमार्गे क्षेमङ्करीं तदाख्यां देवीं स्मृत्वा विपदस्तरन्ति सम्भाव्यमानतत्तदुपद्रवेभ्यो विमुच्यन्ते । अस्या अपि जयावन्मन्त्रध्याने बोद्धव्ये । कान्तारदुर्गे कान्तारं चौराद्युपद्रवोपेतमार्गस्तेन दुर्गे दुर्गमे गिरौ हिमालयकैलासादौ यात्राप्रस्थायिनः शवरीं शवरीरूपिणीं तद्भयनिवारकत्वात्त्वां स्मृत्वा विपदस्तरन्ति पार्वतीयदुर्जन्तुविप्लवेभ्यो मुच्यन्ते । अस्या ध्यानादि स्वयमाचार्योऽग्रे चतुर्थे स्तवे वक्ष्यति, वर्हावतंसेति । भूतप्रेतपिशाचजम्भकभये भूता शून्यकूपैकवृक्षचत्वरादिस्थानस्थाः देवयोनिविशेषा रुद्रपार्श्वदाः प्रेताः प्राणिविशेषाः पिशाचा श्मशानादिवासिन उल्कामुखाः, जम्भो नाम दानवः स एव जम्भकः, इवेप्रतिकृताविति कः । तेन जम्भका रक्षांसि पशुशोणिताद्याकर्षिणः शाकिन्यादिगणाश्च तेभ्यो भये त्रासे समुत्पद्यमाने तन्निमित्तं महाभैरवीं त्वां तद्रूपिणीं स्मृत्वा विपदो भूतादिमहाभीतीस्तरन्ति । 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति श्रुतेः (तैत्ति० २-४)। तदुक्तं 'वायुपुराणे'—

'अरण्ये प्रान्तरे वापि जले वापि स्थलेऽपि वा ।
व्याघ्रकुम्भीरचौरेभ्यो भयस्थाने विशेषतः ॥'

आधिष्वपि च सर्वेषु देवीनामानि कीर्तयेत् ।

इति । अस्या मन्त्रोद्धारो विद्यार्णवे ७ मे श्वासे—

'शिवचन्द्रौ वह्निसंस्थौ वाग्भवेन समन्वितौ ।
नादबिन्दुसुसंयुक्तं प्रथमं बीजमुद्धृतम् ।।
लोपाया वाग्भवं कूटं द्वितीयं बीजमुद्धृतम् ।
शिवचन्द्रौ वह्निसंस्थौ मनुस्वरसमन्वितौ ।।
तृतीयं बीजमाख्यातं बिन्दुनादकलान्वितम् ।' (१-२-३)

स्पष्टम्—

ह्स्रैं हसकलह्रीं ह्स्रौं

इति । ध्यानम्—

'आताम्रार्कसहस्राभां लसच्चन्द्रजटास्फुरत् ।
किरीटरत्नविलसच्चित्रचित्रितमौक्तिकाम् ।।
स्फुरद्रुधिरपङ्काढ्यमुण्डमालाविराजिताम् ।
नयनत्रयशोभाढ्यां पूर्णेन्दुवदनान्विताम् ।।
मुक्ताहारलताराजत्पीनोन्नतघटस्तनीम् ।
रक्ताम्बरपरीधानां यौवनोन्मत्तरूपिणीम् ।।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ।
वरदानरतां नित्यां महाप्रेतासनस्थिताम् ।।'

इति । व्यामुह्यतेऽनेनेति व्यामोहो मायाशक्तिस्तस्या विमोहनस्वभावत्वात्, तेन तत्कार्ये पूर्णचित्स्वभावाख्यात्यात्मावरणाभिभवेऽविद्यात्मनि । यद्वा व्यामोहनं व्यामोहः संकुचितप्रमातृगताख्यात्यात्मा मोहः । न खल्वयं कश्चिद्विवर्तवादिनामिवानिर्वाच्याकारोऽविद्यात्मा, तस्या वस्तुत्वेनेयद्विश्ववैचित्र्यं प्रथयितुं शक्त्यसम्भवात् तत्सम्भवे वा पूर्णमेव वस्तुत्वं स्यान्नानिर्वाच्यत्वम् । नापि सांख्यानामिव रजस्तमोवृत्तिर्व्यामोहः, जडत्वेन तस्य प्रवृत्तिवैचित्र्यानुपपत्तेः । तस्माद् दुर्घटघटनासं-

पादनरूपमीश्वरस्वातन्त्र्यमेतत् । तस्मिन् व्यामोहेऽखण्डसंविन्मयपूर्णस्वरूपाख्यातौ मुमुक्षवस्त्रिपुरां बालात्रिपुरसुन्दरीं त्वां महासारस्वततत्त्वप्रकाशिनीं स्मृत्वा विपदो जन्मजरामरणाद्यावृत्तिपरम्परास्तरन्ति ताभ्यो विमुच्यन्ते। अपुनरावृत्तिं यान्तीत्यर्थः। 'न स पुनरावर्तते' इति श्रुतेः (निरा० ३३)। 'यद्गत्वा न निवर्तन्ते' इति स्मृतेश्च (भ० गी० १५-६)। तन्मन्त्रादिकं तु ज्ञानार्णवे यथा—

'त्रिपुरा त्रिविधा देवि ! बालां तु प्रथमां शृणु ।
यया विज्ञातया देवि ! साक्षात्सुरगुरुप्रभः ।।
सूर्यस्वरं समुच्चार्य बिन्दुनादकलात्मकम् ।
स्वरान्तं पृथिवीस्थं तु तुर्यस्वरसमन्वितम् ।।
बिन्दुनादकलाक्रान्तं सर्गवान् भृगुरव्ययः ।
शक्रस्वरसमोपेतो विद्येयं त्र्यक्षरी मता ।।
गङ्गातरङ्गकल्लोलवाग्गुम्फपददायिनी ।
महासौभाग्यजननी महासारस्वतप्रदा ।'

इति । तथा—

'ध्यायेद्देवीं महेशानि ! कदम्बवनमध्यगाम् ।
रत्नमण्डपमध्ये तु महाकल्पवनान्तरे ।।
मुक्तातपत्रच्छायायां रत्नसिंहासने स्थिताम् ।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ।।
वरदानरतां दिव्यां महासारस्वतप्रदाम् ।'

इति । वामकेश्वरे तु—

'त्रिपुरा परमा शक्ति' रित्यारभ्य (४-४)
'त्रिपुरा ख्यातिमागता' (४-१६)

इत्यन्तं परचिच्छक्तिस्वरूपायास्त्रिपुराभिधाया देव्याः सूक्ष्मध्यानमुक्तम् । तथा सिन्धुयात्रागामिनः तोयप्लवे तोये सलिले प्लवः प्लवनं निमज्जनं तत्र प्राप्ते, यद्वा तोयस्थे प्लवे नौकायां वर्तमाना इत्येवं

सर्वत्र वा विशेषणतया योज्यम् । तारां ताराख्यां देवीं त्वां तथैव स्मृत्वा सिन्धुपारगामिनो विपदो वारिब्रुडनादिरूपास्तरन्ति पारगा भवन्तीत्यर्थः । तन्मन्त्रोद्धारो यथा 'मत्स्यसूक्ते'—

'मायाबीजं समुद्धृत्य तकारं वह्निसंयुतम् ।
मायाबिन्दुस्वरयुतं द्वितीयं बीजमुद्धृतम् ।
कूर्चबीजं तृतीयं च फट्कारं तदनन्तरम् ।
सम्पूर्णं सिद्धमन्त्रं तु रश्मिपञ्चकसंयुतम् ।।'

इति । ध्यानं तु—

'ध्यायेत्कोटिदिवाकरद्युतिनिभां बालेन्दुयुक्शेखरां
रक्ताङ्गीं रशनासुरक्तवसनां पूर्णेन्दुबिम्बाननाम् ।
पाशं कर्तृमहाङ्कुशादिदधतीं दोर्भिश्चतुर्भिर्युताम्
नानाभूषणभूषितां भगवतीं तारां जगत्तारिणीम् ।।'

इति । एवं सप्तधा विपन्मोचनाय सप्तविभूतिरूपाणां देव्यन्तराणामुपास्त्योपासकानामसाधारणं फलमुक्तम् । वक्ष्यमाणमन्त्रपारायणक्रमवदेतासामपि जपप्रकारो बोद्धव्य इति । एवं साधकाशयभेदवैचित्र्यात् स्वस्वातन्त्र्येणाभासितानुग्राहिचित्राकृतिमत्त्वं परदेवतायाः कारुण्यादिति बोध्यम् । यदाहुः—

'येन येन हि रूपेण साधकः संस्मरेत् सदा ।
तस्य तन्मयतां याति चिन्तामणिरिवेश्वरः ।।'

इति ।।१७।।

अथ परदेवताया मन्त्रपारायणजपप्रकारगर्भितैर्विशिष्टनामभिः स्तुतिं कुर्वन्नाह—

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।

शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥१८॥

हे भगवतीति सम्बुध्यनुषङ्गः प्राग्वदस्य व्याख्या ज्ञेया। माया नाम चिद्रूपस्य भगवतः ब्रह्मणः शक्तिः । सा जडाजडात्मना द्विविधा । तत्राद्या विश्वस्य परिणाम्युपादानं, विवर्तोपादानत्वं तु ब्रह्मणः । अतो मायाकार्यस्य विश्वस्य मायिकत्वाज्जडत्वमिथ्यात्वे स्तः । तदुक्तं भक्तिसूत्रेषु—'तच्छक्तिर्माया जडसामान्यादिति' । अद्वैतश्रुतीनां तु पारमार्थिकतत्त्वैकत्वे तात्पर्यात् । 'सर्वं खल्विदं ब्रह्म' (त्रि०म०ना० १-३) इत्यादिस्तु बाधासामानाधिकरण्यपरत्वात् । द्वितीया तु परब्रह्मणि नित्यसमवेता चिच्छक्तिरपरिच्छिन्नरूपत्वान्मायेत्युच्यते । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति' (श्वेता० ६-८) । 'माया चाविद्य च स्वयमेव भवति' (नृसिहो० ९-३) इत्यादि श्रुतेः ।

तदुक्तं श्रीतन्त्रालोके—

'माया च नाम देवस्य शक्तिरव्यतिरेकिणी ।
भेदावभासस्वातन्त्र्यं तथा हि स तया कृतः ॥
आद्यो भेदावभासो यो विभागमनुपेयिवान् ।
गर्भीकृतानन्तभाविविभागा सा परा निशा ॥'

इति । कौर्मेऽपि—

'इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी ।
माया मम प्रियानन्ता ययेदं मोहितं जगत् ॥
अनयैतज्जगत्सर्वं सदेवासुरमानुषम् ।
मोहयामि द्विजश्रेष्ठाः सृजामि विसृजामि च ॥'

इति शिवोक्तेः । एवं विश्वस्य चिद्विलासत्वं सत्यतायां पर्यवस्यति । 'सर्वं ब्रह्म' (महो० ५-११३) इत्यादि श्रुतीनां सामानाधिकरण्यस्यात्यन्ताभेद एव स्वारस्यात् । प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तो

विकल्प्यश्चेति, तथा 'एकमेवाद्वितीयं ब्रह्म' (त्रि० म० ता० ३-३) 'नेह नानास्ति किञ्चन' (कठो० ४-११) इत्यादेर्भेदप्रथास्पदत्वौचित्यप्रत्याख्याने पर्यवसितत्वात्। आत्मकृतेः परिणमात्, तदन्यत्वमारम्भणशब्दादिभ्यः, इत्यादिवैयासिकसूत्राणामप्यस्मिन्नेवार्थे विश्रान्तेरित्ययं तान्त्रिकसंमतः पक्षः। माया नाम प्रधानं तच्च स्वतन्त्रमिति सांख्याः प्राहुः। वेदान्तिनस्तु शिवस्य सा शक्तिरेवेति। शक्तिरित्यनेन तु पारतन्त्र्यमुच्यते। एवमुक्तविधा माया त्वमसि। तथा कुण्डलिनी पुर्यष्टकप्राणितकल्पत्वात् पिण्डाण्डातर्वर्तिनी जीवनाख्या शक्तिः। तदुक्तं 'वासिष्ठे' चूडालोपाख्याने—

'पुर्यष्टकापराख्यस्य मनसो जीवनात्मिकाम्।
विद्धि कुण्डलिनीमन्तरामोदस्येव मञ्जरीम्॥'

इति। 'ब्रह्माण्डेऽपि'—

महाशक्तिः कुण्डलिनी बिसतन्तुतनीयसीति।

तत्स्वरूपादिविवरणं तु श्रीतन्त्रराजे—

'मूलाधारस्थवह्न्यात्मतेजोमध्ये व्यवस्थिता।
जीवशक्तिः कुण्डलाख्या प्राणा[1]काराथ तैजसी॥
प्रसुप्तभुजगाकारा त्रिरावर्ता महाद्युतिः।
मायाशीर्षा नदन्तीं तामुच्चरत्यनिशं खगे[2]॥
सुषुम्नामध्यदेशे सा यदा कर्णद्वयस्य तु।
पिधाय न शृणोत्येनं ध्वनिं तस्य तदा मृतिः॥' (प० ३० श्लो० ६४-६६)

इत्यादि। एतत्प्राग्विस्तरेण प्रपञ्चितम्। कुण्डले कर्णाभरणे अर्केन्दुमण्डलात्मके विद्येते अस्या इति वा कुण्डलिनी।

---

1. प्राणाकारेण तेन सा 2. स्वगे इति पाठान्तराणि (आर्थर एवलान सम्पादिते)

तदुक्तं 'ब्रह्माण्डे'—

ताटङ्कयुगलीभूततपनोडुपमण्डला'।

इति। तथान्यत्र—

'सूर्यचन्द्रौ स्तनौ देव्यास्तावेव नयने स्मृतौ।
उभौ ताटङ्कयुगलमित्येषा वैदिकी श्रुतिः ॥'

इति। तथा क्रिया चित्स्वभावस्य परमेश्वरस्य स्पन्दतत्त्वात्मिका पराभट्टारिकाख्या शक्तिरेव विश्ववैचित्र्यावभासनकारित्वेन क्रियाशक्तिरित्युच्यते। सर्वाकारयोगित्वं क्रियाशक्तिरिति ह्याचार्याः, या परिमितप्रमातृणां तथात्वेन प्रत्यभिज्ञानाप्रत्यभिज्ञानाभ्यां बन्धमुक्ती विदधाति। तदुक्तं स्पन्दे—

'सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥' (४ नि० २८ का०)

इति। 'मालिनीवार्तिकेऽपि'—

'क्रिया हि नाम नास्माकमन्या शक्तिस्त्वसौ यतः।
शक्तिश्च फलभित् क्लृप्त्या भावात्मैव विभेदतः ॥
सा च शक्तिर्विभोरेव स च विश्वात्मविग्रहः।
फलकारकभेदेन न भिन्नः परमार्थतः ॥
स्वात्मन्यभिन्नेऽपि विभोरेवं भेदावभासनात्।
क्रिया शक्तिरिति प्रोक्ता यया कर्ता महेश्वरः ॥' (प्र० का० ३०५, ३०६, ३०७, ३०८)

इति। अथ च—हस्तमुत्क्षिपत्यपक्षिपतीति पूर्वोत्तरीभूतसक्रमव्यापारक्षणलक्षणा क्रिया, तस्याः केचित्प्रत्यक्षग्राह्यतामिच्छन्ति काणादवत्।

यदाहुः—

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥'

इति । तथा—

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुध्या प्रकल्पिताभेदः क्रियेत्यभिधीयते ॥'

इति । अन्ये तु हस्तगतोत्क्षेपणादिति व्यपदिश्यते रूपभेदसंपादनात्संयोगविभागनिमित्तभूतातीन्द्रिया शक्तिरूपा क्रियेति 'प्रतिपन्नास्तस्या अनुमेयतामिच्छन्ति, इत्युक्तरूपायाः क्रियाया लौकिक्या वेद्यभागे कालावच्छिन्नत्वात्सक्रमत्वम् । या तु पारमेश्वरी तदव्यतिरिक्ता स्पन्दात्मा लौकिकीक्रियाशक्तिस्तस्याः कालकृतविच्छेदाभासासंभवात् सक्रमत्वं नोपपद्यते । तदुक्तम्—

'सक्रमत्वं च लौकिक्याः क्रियायाः कालशक्तितः ।
घटते न तु शाश्वत्याः प्राभव्याः स्यात्प्रभोरिव ॥'

इति । वस्तुतस्त्वान्तरी स्पन्दशक्तिरेव बाह्यपर्यन्तं स्फुरित्वा क्रियेत्युच्यते । तत्पल्लवभूतत्वादशेषबाह्यस्पन्दानामिति । तदुक्तं 'मालिनीविजये'—

'एवंभूतमिदं वस्तु भवत्विति यदा पुनः ।
ज्ञात्वा[1] तदैव तद्वस्तु कुर्वत्यत्र क्रियोच्यते ॥' (७, ८, श्लो०)

इत्येवं क्रमाक्रमवत्त्वेन द्विधा क्रिया, तद्रूपा त्वमसि । तथा मधु मद्यं पुष्परसः क्षौद्रं वा यागार्चनादिसमये निवेद्यं विद्यतेऽस्या इति मधुमती । 'महत्यै वा एतद्देवतायै रूपं यन्मधु' इति श्रुतेः 'यन्मधुनाजुहोति महतीमेव तद्देवतां प्रीणातीति च श्रुतेः' प्रीणयतीत्यर्थः एतेन मधुपानानन्दिता काकिन्यम्बास्वरूपेत्युक्तं भवति । तदुक्तम्—

'स्वाधिष्ठानाख्यपद्मे रसदललसिते वेदवक्त्रां त्रिनेत्रां
हस्ताभ्यां धारयन्तीं त्रिशिखगुणकपालाभयान्यात्तगर्वाम् ।

1. 'जाता तदैव तत्तद्वत्कुर्वत्यत्र क्रियोच्यते' (मु०पु०पाठः)

मेदोधातुप्रतिष्ठामलिमदमुदितां बन्धिनीमुख्ययुक्तां
पीतां दध्योदनेष्टामभिमतफलदां काकिनीं भावयामः ॥'

इति । 'ब्रह्माण्डेऽपि'—

'मेदोनिष्ठा मधुप्रीता' इत्यादि 'काकिनीरूपधारिणी' इत्यन्तम् । यद्वा मधु समस्तानन्दरसविशेषणां सामरस्यानन्दरसात्मकमस्या अस्तीति मधुमती जगदानन्दभूमिकात्मा, 'रसो वै सः, रसमेव हि लब्ध्वानन्दी भवतोति श्रुतेः' (तैत्ति० २-७) 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेश्च' (बृह० ४-३-३२)। यद्वा 'आदित्यो वै देवमधु' इत्यादिश्रुतौ विहिता मधुमत्याख्यविद्याविशेषरूपा, अथ च—चतुर्धा योगिषु चतुर्थस्य सप्तभूमिका अतिक्रमणीया योगशास्त्रे प्रसिद्धाः। तासु सप्तमी भूमिका मधुमतीत्युच्यते । यदाहुः, तत्र मधुमती नाम अभ्यासवैराग्यादिवशादपास्ततमोलेशसुखप्रकाशमयसत्त्वभावनयानवद्यवैशारद्यविद्योतनरूपऋतम्भरप्रज्ञाख्या समाधिसिद्धिः । तदुक्तम्—

'ऋतंभरा तत्र प्रज्ञा' इति—तस्यां भूमिकायां हि यज्ज्ञानमुत्पद्यते तदेव तारकं, ततः संसारतारिका इति यावत् । तन्त्रप्रसिद्धा मधुमतीविद्या वा । तदुद्धारो यथा 'श्रीविद्यार्णवे'—

'मादनं शिवबीजं च वायुबीजं ततः परम् ।
इन्द्रबीजं ततः पश्चान्महामायां समुद्धरेत् ॥'

इयं मधुमती विद्येति, मधुमती नदीविशेषा काश्मीरेषु शारदापीठे (क्षेत्रे) प्रसिद्धा वा तपेत्यद्धर्थः । कालीतिपरास्वातन्त्र्यशक्तिरूपा संविद्देव्येव, असंख्येयविश्वशक्तीनां तत्तद्रूपतया कलनात्, सृष्टयादिदेवीनां वा पञ्चधा कलनां विदधाना कालीशब्दव्यपदेश्या । तदुक्तं क्रमनयसाम्राज्यशालिभिः श्रीमदभिनवगुप्तपादैः—

'क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात् ।
स्वात्मनो भेदनं क्षेपः' इत्यारभ्य

'इति पञ्चविधामेनां कलनां कुर्वती परा।
देवी काली तथा कालकर्षिणी चेति कथ्यते ॥'

इति। तद्गुरुभिरपि श्रीभूतिराजैः—

'क्षेपाज्ज्ञानाच्च काली कलनवशतया'

इति। अथ च मृत्युमपि या कलयति सा काली। 'मृत्युर्यस्योपसेचनमिति श्रुतेः'। यदाह कालिदासः—

'एतदम्ब सदिदं तु नेति नः शङ्कया हृदि विकल्पलक्षणः।
यो यमः स खलु काल्यते त्वया भूतसंयमनकेलिकोविदः ॥'

इति। आगमेऽपि—

'सैव काली महादेवी गीयते लोकवेदयोः।
इतिहासेषु तन्त्रेषु सिद्धान्तेषु कुलेषु च ॥'

इति। दारुकासुरवधार्थं शिवेन निर्मिता काली तद्रूपा वा, या दारुकं निहत्य शान्तेन क्रोधाग्निना त्रैलोक्यं क्षोभयामास। तत्क्रोधनिरासाय शिवो बालो भूत्वारोदीत्। तं बालं सा स्वस्तनावपाययत्। स तस्याः पयोद्वारा कोपाग्निमपि पपौ, ततः सा शान्ताऽभूदिति लैङ्गे प्रसिद्धम्।

तथा कलेति—हकारार्धार्धरूपामाख्या सप्तदशी कला या पुरुषे षोडशकले तामाहुरमृतां कलामि' त्याद्युक्तेः षोडशानामन्तः करणप्रभृतीनामपि कलानामाप्यायनकारिणी अनस्तमितरूपा। तदुक्तम्—

'कला सप्तदशी तस्मादमृताकाररूपिणी।
परापरस्वस्वरूपबिन्दुगत्या विसर्पिता ॥'

इति। अथ च बैन्दवी कला। तदुक्तम्—

'ऊर्ध्वे तु संस्थिता सृष्टिः परमानन्ददायिनी।
पीयूषवृष्टि वर्षन्ती बैन्दवी परमा कला ॥'

'बृहत्पाराशरस्मृतौ' तु—

'दशपञ्चांगुलव्याप्तं नासिकाया बहिः स्थितम् ।
जीवो यत्र विशुद्धचेत सा कला षोडशी स्मृता ॥'

आत्मैवास्य षोडशी कलेति बृहदारण्यकोक्तेश्च । एतदग्रेऽपि विस्तृत्य निरूपयिष्यते । व्योमस्था शान्त्यतीताख्या कला वा, मोक्षसुखानुभवजनकत्वात् तदुक्तं शैवागमे—

शान्त्यतीताकलाद्वैतनिर्वाणानन्दबोधदा

इति । तथा मालिनी बीजयोनिसंघट्टात्मकनादिफान्तमन्त्रविशेषाभिमानिनी देवता । अथ च रुद्रशक्तिमालास्त्यस्या इति मालिनी मुख्यं शाक्तं स्वरूपम् ।

'बीजयोनिसमापत्तिविसर्गोदयसुन्दरा ।
मालिनी हि पराशक्तिर्निर्णीता विश्वरूपिणी ।'

इति तथा—यत्सारमस्य जगतः सा शक्तिर्मालिनी परा इत्युक्त्या परविमर्शशक्तिरूपेत्यर्थः । असौ सर्वसिद्धिवितरणक्षमा चेति । तदुक्तं 'श्रीतन्त्रालोके'—

'अन्योन्यबीजयोनीनां क्षोभाद्वैसर्गिकोदयात् ।
कां कां सिद्धिं न वितरेत्किं वा न्यूनं न पूरयेत् ॥'

इति । यद्वा देव्याः सखी मालिनी तद्रूपा वा । यदुक्तं 'वामनपुराणे' पार्वतीविवाहप्रकरणे सप्तपदीक्रमणं प्रकृत्य—

'ततो हराङ्घ्रिमालिन्या गृहीतो दायकारणात् ।
किं याचसे ददाम्येष मुञ्चस्वेति हरोऽब्रवीत् ॥
मालिनी शंकरं प्राह मत्सख्यै देहि शंकर ।
सौभाग्यं निजगोत्रीयं ततो मोक्षमवाप्स्यसि ॥
अथोवाच महादेवो दत्तं मालिनि मुञ्च माम् ।'

इति । मालिनी मन्दाकिनीरूपा वा । 'मन्दाकिन्यां च लिमनीति विश्वः' । यद्वा मालिन्यन्तर्दशारचक्राभिमानिनी देवता त्रिपुरमालिनीत्यर्थः । तथा मातङ्गी मातङ्गीशक्तिरूपा सर्वज्ञस्य मतङ्गमुनेरपत्यतामाप्ता महादेव्यवतारस्वरूपा, यां प्रियां त्रिपुराञ्जेतुकामो भगवाञ्छम्भुर्यागार्थं वव्रे इति श्रूयते किल । तदुक्तं 'ब्रह्मयामले'—

'अस्मिन् सर्वज्ञकल्पोऽसौ मतङ्गो मुनिपुंगवः ।
वर्षाणामयुतं वत्स ! तप उग्रं चचार ह ।।
तेन प्रीता महादेवी देवानां हितकारिणी ।
वरं वृणीष्व भगवन् दास्यामि तव वाञ्छितम् ।।
तच्छ्रुत्वा द्विजवर्यस्तां ययाचे धर्मसाधनम् ।
हे देवि ! जगतां मातः ! प्रीता चेद्यदि साम्प्रतम् ।।
अपत्यतां समासाद्य मत्कुलालम्बनं कुरु ।
इत्यभ्यर्थ्य मुनिश्रेष्ठो जनयामास तां सुताम् ।।
श्यामलां चारुवदनां वीणाशुकसमन्विताम् ।
शारिकां ज्ञानसम्पन्नां जपमालां कराम्बुजैः ।।
धारयन्तीं विशालाक्षीं शंखताटङ्कशोभिनाम् ।
सा बभूव महादेवी मतङ्गकुलनन्दिनी ।।
मातङ्गीति सदा देवी विख्याता वरदायिनी ।'

इत्यादि । यस्या मन्त्रजपादिसेवनात् काव्यादिसंगीतकलासु नैपुण्यमुत्पद्यते । यदुक्तम्—

'समस्तेष्वपि शास्त्रेषु पाण्डित्यमधिकं भवेत् ।
विशिष्टशिष्टगम्भीरपदविन्यासकोमले ।।
ललिते च कवित्वेऽसौ प्रगल्भः सुतरां भवेत् ।
सगीते सर्वविद्यासु चात्यन्तं निपुणो भवेत् ।।'

इति । तथा विजयेति महादेवी यदा पद्मनामकं दैत्यानां राजानं विजिग्ये तदा विजयेत्याख्यया ख्यातिं जगाम । तदुक्तं 'देवीपुराणे'—

'विजित्य पद्मनामानं दैत्यराजं महाबलम् ।
त्रिषु लोकेषु विख्याता विजया चापराजिता ॥'

इति । यद्वा विशिष्टो जयो ब्रह्मादिकारणमालापेक्षया यस्याः सा । अथ च विशिष्टो जय इन्द्रियवृत्तिनिरोधाख्यो यया सा संविद्रूपा । यद्वा विशिष्टजयदायित्वाद्विजयाख्यमुहूर्तकालस्वरूपा । तदुक्तं 'चिन्तामणौ'—

'आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धिदः ॥'

इति । रत्नकोशे तु—

'ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुन्निद्रतारकः ।
विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः ॥
एकादशो मुहूर्तो यो विजयः परिकीर्तितः ।
तस्मिन् यात्रा विधातव्या सर्वैर्विजयकांक्षिभिः ॥'

इति । किं च नित्याविद्यासु त्रयोदशी विजया नित्याविद्यास्वरूपा वा तद्ध्यानार्चनयन्त्रादिविनियोगाः 'श्रीतन्त्रराजे' (१८ पटले) द्रष्टव्याः । तथा जया कर्माकर्मतत्परिणामादिषु जयोऽस्त्यस्या इत्यर्शाद्यचि टाप्, तद्विनिर्मुक्तेत्यर्थः । 'एष नित्यो महिमा ब्रह्मणस्य न कर्मणा वर्धते नो कनीयान् इति काठकश्रुतेः' । 'स न साधुना कर्मणा भूयान् नो वासाधुना कनीयानिति वाजसनेयश्रुतेश्च' (बृह० ४-४-२२) । 'न मां कर्माणि लिम्पन्तीति स्मृतेश्च' (भ० गी० ४-१४) । अर्थान्तराणि प्राग्व्याख्यातानि । भगवती देवीत्येतदपि व्याख्यातचरम् । तथा शिवं सुखं पूर्णानन्दात्मकमस्त्यस्या इति शिवा, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः' (बृह० ४-३-३२) । तुरीयसंविद्रूपा वा, प्रमाणादित्रयस्य शाक्तस्फारानुसंधानेन चमत्करणात् । 'शिवं चतुर्थमद्वैतं मन्यन्ते स आत्मेति श्रुतेः, 'त्रितयभोक्ता वीरेशः' इति शिवसूत्रोक्तेश्च (१-११) । तदुक्तम्—

'त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ।।'

इति च । यद्वोपायोपेययोरभेदोपचारात्कामेश्वराख्यपरमशिवधामासादनोपायरूपा । तदुक्तं 'वासिष्टे'—

'स्पन्देन लभ्यते वायुर्वह्निरौष्ण्येण लभ्यते ।
चिन्मात्रममलं शान्तं शिव इत्युदितं तु यत् ।।
यत्स्पन्दमयशक्त्यैव लक्ष्यते नान्यथा किल ।'

इति । विज्ञानभैरवेऽपि—शैवी मुखमिहोच्यते। (२० श्लो०)

'यथालोकेन दीपस्य किरणैर्भास्करस्य वा ।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये ।।' (२१ श्लो०)

इति । शिवादव्यतिरिक्तस्वभावा वा शिवा । तदुक्तम्—

'चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः ।
अनुप्रविष्टा या संविन्निर्विकल्पा स्वयम्प्रभा ।।
सदाकारा परानन्दा संसारोच्छेदकरिणी ।
सा शिवा परमादेवी शिवाभिन्ना शिवङ्करी ।।'

इत्यग्रेऽपि विस्तरशो निरूपयिष्यते एतत् । तथा शम्भोरियं शाम्भवी शिवावस्था सा हि समस्तभेदात्मकमायीयक्षोभप्रसरप्रशान्त्या चिदात्मकपरानन्दोच्छलत्तारूपा खेचरी दशा । तदुक्तं शिवसूत्रेषु—

'विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था ।' (२-५)

इति । तन्त्रसद्भावेऽपि—

'परां गतिमेत्यर्थभावेन कुलमार्गेण नित्यशः ।
चरते सर्वजन्तूनां खेचरी नाम सा स्मृता ।।'

इति । अन्यत्रापि—

'उद्यन्तृताबलेन तु विकासवृत्त्या स्वरूपगस्तिष्ठेत् ।

स्वयमुपसृतेन्द्रियार्थानश्नन्नानन्दभूमिगो योगी ॥
एषोच्छृंखलरूपा विकस्वरतरा प्रबुद्धबुद्धीनाम् ।
सिद्धाः स्थिताः सदास्यां ह्यानन्दरताः पराच मुद्रैषा ॥'

इति । अपरा तु व्यापिन्यादिसंस्थानविशेषानुसरणेनानुभूयमानामितयोगिगम्या । तदुक्तम्—

'बद्धपद्मासनो योगी नाभावक्षेश्वरं न्यसेत् ।
दण्डाकारं तु तावत्तन्नयेद्यावत् कखत्रयम् ॥
निगृह्य तत्र तत्तूर्णं प्रेरयेत् ख त्रयेण तु ।
एतां बद्ध्वा महायोगी खे गतिं प्रतिपद्यते ॥'

इति । अथ च शम्भोः स्वात्माभिन्नानुत्तरसंवित्प्रकाशात्मन इयं तत्परिज्ञानोपायात्मिका शक्तिः शाम्भवी श्रीपादुकाभिधा । यदुक्तमभियुक्तैः—परापरात्मनः स्वात्मनः परानन्दमयी स्वव्यतिरेककवलनोद्युक्ता पराशक्तिः पादुकेति गीयते । यद्वा ज्ञानादिशक्तीनां तुलापुटन्यायेनात्यन्तं वैषम्यवैधुर्यशालिनी यावस्था सा सांख्यादिसिद्धान्तिदुर्गम्या प्रकृतितत्त्वाख्या शाम्भवी शक्तिः । तदुक्तम्—

'ज्ञानक्रियामायानां गुणानां सत्त्वरजस्तमःस्वभावानाम् ।
अविभागावस्थायां तत्त्वं प्रकृतिरिति शाम्भवी शक्तिः ॥'

शाम्भवानामियं माता वा, शाम्भवीमुद्राविशेषरूपा । तल्लक्षणं तु—

'अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषासौ शाम्भवीमुद्रा सर्वतन्त्रेषु गोपिता ॥'

इति । दीक्षाविशेषरूपा वा । एतस्या अर्थान्तराणि वितनिष्यन्तेऽग्रे । तथा शक्तिः कामेश्वर्याभिख्या स्वातन्त्र्याख्या वा, उपादानादिकारकपारतन्त्र्यमन्तरेणैवाशेषप्रपञ्चनिर्माणादिकार्यकर्तृत्वात् । तदुक्तं—

'पञ्चप्रकारकृत्योक्तिशिवत्वान्निजकर्मणे ।
प्रवृत्तस्य निमित्तानामपरेषां क्व मार्गणम् ॥'

इति, चिदादिषश्वशक्तीनां समष्टिरूपा वा। यद्वा परादीनां शक्तीनां तिसृणां स्वान्तः क्रोडीकृत्यानुसन्धानात्मना या ग्रसते सा श्रीपरैव काचिच्छक्तिः श्रीमातृसद्भावकालकर्षिण्यादिशब्दान्तरव्यपदेश्या। ताश्च तिस्रो यथा। यदाहुराचार्याभिनवगुप्तपादाः—

ययेदं शिवादिधरण्यन्तमविकल्पसंविन्मात्ररूपतया बिभर्ति च पश्यति च भासयति च परमेश्वरः सास्य श्रीपराशक्तिः। यया च दर्पणहस्त्यादिवद्भेदाभेदाभ्यां सास्य श्री परापरशक्तिः। यया परस्परवैविक्त्येन सास्य श्रीमदपराशक्तिरिति।

अथ च शक्तिर्देवीपरिनिष्ठिता महिमाशक्तिर्ययेदं ब्रह्माण्डानां चक्रं सृष्टिस्थित्यादिरूपैरविश्रान्तं परिभ्राम्यते। तथा हि श्रुतिः—

'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः।
देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्॥'
(श्वेताश्व० ६-१)

इति। स्मृतिश्च—

'भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' (भ० गी० १८-६१)

इति तथा शङ्करवल्लभेति करोतीति करः पचाद्यच्, 'कृञो हेतुः' इति वा टः शं सुखं तस्य करः। शमभयात्मकं करे यस्येति वा, शमित्यानन्दः 'हस्तः शक्तिः प्रकीर्तितः' इति शैवसमयोक्तेः। करे विसिसृक्षात्मन्यानन्दशक्तौ यस्येति वा। यदुक्तम्—

आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते'।

इति। शंकरः कामेश्वरस्तस्य वल्लभा प्रेयसी। एतेन प्रकाशैकात्मनः परमशिवस्य विमर्शप्राणितत्वेन शक्त्यधीनात्मलाभकत्वाद् धर्मिण एव धर्माधीनत्वं, नेयं गुणभूतेति ज्ञेयम्। अत एव तस्यां पराहन्तात्मासाधारणधर्मत्वेन धर्मत्वमात्रं कल्पितं न तु सा कल्पिता तस्मात्सा ब्रह्मकोटिरिति गीयते। तदुक्तम्—

'नित्यं वसति तत्रापि पार्वत्या सह नर्मकृत् ।
मध्ये देवीगृहं तत्र तदधीनस्तु शंकरः ॥'

इति । अथ च शंकरो वल्लभः पतिर्यस्याः सा स्वाराज्यसिद्धौ कृताभिषेकत्वात्तन्महिषीत्यर्थः । तदुक्तं 'ब्रह्माण्डे'—

'महाकामेशमहिषी महात्रिपुरसुन्दरी'

इति । एवमप्युभयथावृत्त्या च परस्पराधीनवृत्तित्वं तयोरैकात्म्ये पर्यवसितमित्यर्थः । तदुक्तं तत्रैव—

'ईशान्यां नाटके शैले शङ्करस्य सदाश्रयम् ।
नित्यं वसति तत्रेशस्तदधीना तु पार्वती ॥'

यद्वा शंकरो विद्यते स्वामित्वेन येषां ते शंकरवन्तो माहेश्वरास्तैर्लभ्यते इति लभा कर्मणि घः । तैः प्राप्या, एतेन शंकरभक्तिमद्भिरेव ज्ञेयेति । तथाहि स्मृतिः—

'भक्त्या त्वनन्यया शक्योऽहमेवंविधोऽर्जुन ! ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥' (भ० गी० ११-५४)

इति । श्रुतिश्च—

'ब्रह्मसंस्थोऽमृतत्वमेतीति' । (छां० २-२३-१) ।

तथा त्रिनयनेति—त्रीणि नयनानि मूर्तिप्रकाशानन्दचक्राणि परमोपासनाप्रकारसाधनानि यस्याः सा । तदुक्तं महाप्रकाशान्तेवासिभिः—

'श्रीपीठपञ्चवाहनेत्रत्रयवृन्दचक्राणि स्मरत ।
स्मरत च गुरूणां पंक्तिं पञ्च च शक्तीः सृष्टिप्रमुखाः ॥'

इति । असौ त्रिविधोपास्तिक्रमः परशक्तिपातानुविद्धहृदयैः सद्गुरुसपर्ययैव लभ्य इति रहस्यत्वान्नास्माभिरुन्मील्यते । त्रीण्यग्न्यर्केन्दुरू-

पाणि नयनानि नेत्राणि यस्या वा । अथ च त्रीन्समावेशोपायाञ्छाम्भवादीञ्छक्तिपातवैचित्र्येणानुग्राह्यान्नयतीति वा । तदुक्तमभिनवगुप्तपादैः—

'तदेवं तत्त्वरूपेऽस्मिन्विचित्रे प्रविविक्षताम् ।
उपायभेदात्त्रैविध्यं समावेशेषु वर्णितम् ।।
अनुपायः शाम्भवोऽसौ चिदुपायस्ततः परम् ।
जडोपायस्त्वाणवः स्यात्स चापि बहुधा मतः ।।'

इति । यद्वा नयति प्रापयति प्रमामिति व्युत्पत्तेर्नयनशब्दस्य प्रमाणपरत्वात् त्रीणि प्रमाणानि शब्दलिङ्गाध्यक्षात्मकानि यस्यां सा । तद्विषयिकप्रमाजनने त्रिधा प्रमाणोपयोगसम्भवात् । तत्रागमजन्यं ज्ञानं शाब्दं तस्य श्रवणात्मकत्वात् । लिङ्गजन्यं यौक्तिकं त्वानुमानिकं तस्य मननात्मकत्वात् । स्वानुभवजन्यमध्यक्षं तस्य निदिध्यासनात्मकत्वात् । एतेषां त्रयाणां स्वात्मदर्शनसाधनत्वमाम्नायते । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इति श्रुतेः' । (बृह० २, ४, ५) ।

तथा च योगसूत्रम्—'प्रत्यक्षानुमानागमाः प्रमाणानीति । सांख्यसूत्रमपि—'त्रिविधं प्रमाणमिति' । अथ च तिस्रः इच्छादिशक्तयः, परापरादिशक्तयो वा, वामादयो वा भारत्यादयो वा, प्रमाणानि विश्वव्यवहारसंपादनसाधनानि यस्या इति वा । त्रीन् मार्गान्दक्षिणोत्तरब्रह्माभिधान् नयत्यधिकारिणः प्रापयतीति वा । तदुक्तं 'देवीपुराणे'—

'दक्षिणं चोत्तरं लोकं तथा ब्रह्मायणं परम् ।
नयं सन्मार्गवर्गं च नेत्री त्रिनयना मता ।।'

इति । उत्तरत्रापीमे मार्गा निरूपयिष्यन्ते । वौषडिति मन्त्रस्य त्रिनयनेति संज्ञा तद्रूपा वा । एतदत्रैव मन्त्रपरायणार्थविवरणे दर्शयिष्यते । तथा वाचं सरस्वतीं तदुपलक्षितां कवित्वशक्तिं वदति निर्मिणोति सृजतीति । वदन्तीमन्तर्यामिभावेन प्रेरयतीति वा वाग्वादिनी ।

वाचि रहस्यागमरूपायामुपनिषदि वा वदते भासते इति वा तद्विषयकाध्यात्मज्ञानज्ञेयेत्यर्थः। अत्राभासनार्थवृत्तिना वदतिनात्मनेपदान्तविग्रहवाक्यमेवमर्थगमकमिति ज्ञेयम्। तथा च ब्रह्मसूत्रम्—

'शास्त्रयोनित्वादिति'। 'सर्वे वेदा यत्पदमामनन्तीति' श्रुतेः (कठो०-२-१५)। 'वेदैश्च सर्वैरहमेव वेद्यो' इति स्मृतेश्च। (भ० गी० १५-१५)।

यद्वा वाचो वेदाद्यात्मिका वदतीति वा। तदेतन्महतोभूतस्य निःश्वसितं यदृग्वेदो यजुर्वेदः सामवेद इत्यादिश्रुतेः। 'यस्य निश्वसितं वेदा' इति च। तदुक्तं 'ब्रह्माण्डे'—

'निःश्वास मारुतैर्वेदानृचं सामयजुस्तथा।
आथर्वणमहामन्त्रानभिमानेन चासृजत्॥
काव्यनाटयाद्यलङ्कारानसृजन्मधुरोक्तिभिः।'

इत्यादि। अर्थान्तराणि पूर्वं व्याख्यातानि। तथा भैरवा वटुकादयो भीरूणां समूहो वा। तेषामियमाराध्येति सामान्यसम्बन्धमात्रवाचिन्यणि भैरवी। 'भ्रियात्सर्वं रवयति सर्वदो व्यापकोऽखिले'। इति भैरवीशब्दस्य सन्ततोच्चारणाच्छिवः'। इति विज्ञानभैरवोक्तनीत्या भरणरवणवमनकारित्वात् सृष्टयादिकृत्यकारी परमशिवस्तस्येयमिति विभूतिसम्बन्धिनीस्त्री वा। त्रिपुराम्बाचक्रेश्वरीविद्यायां मध्यकूटे रेफनिष्कासे तस्या भैरवीति संज्ञा तद्विद्यात्मिका वा। 'द्वादशाब्दा तु भैरवीति धौम्योक्तेर्द्वादशवर्षकन्यारूपा वा। अथ च 'उद्यमो भैरवः' (१-५)। 'इच्छाशक्तिरुमा कुमारी' (१-१३)। इति शिवसूत्रोक्तनीत्या परप्रतिभोन्मज्जनात्मकोद्यन्तृतास्वभावत्वेनाखिलशक्तिसामरस्याद्विश्वभरितवपुर्भैरवस्तस्येयं शक्तिरुमापरपर्यायेच्छाख्या। तदुक्तं 'तद्वार्तिके'—

'योऽयं विमर्शरूपायाः प्रसरन्त्याः स्वसंविदः।
झटित्युच्छलनाकारप्रतिभोन्मज्जनात्मकः॥
उद्यमोऽन्तःपरिस्पन्दः पूर्णाहंभावनात्मकः।

स एव सर्वशक्तीनां सामरस्यादशेषतः ॥
विश्वतो भरितत्वेन विकल्पानां विभेदिनाम् ।
अलं कवलनेनापीत्यन्वर्थादेव भैरवः ॥
योऽयमुक्तः स्वसंवित्तेरुद्योगो भैरवात्मकः ।
अस्यास्ति महती शक्तिरतिक्रान्तक्रमाक्रमा ॥'

इत्यादि । तथा—

'ईदृग्विस्मयवद्योगभूमिकारूढचेतसः ।
परभैरवतां युक्त्याभ्यसमानस्य शाश्वती ॥
तस्यैव योगिनो येच्छा शक्तिः सैव भवत्युमा ।
परा भट्टारिका सैव ॥'

इत्यादि । तथा—

'तत्त्वे तत्त्वे स्वेच्छया देवदेवः
सर्वां सर्वां भूमिमालम्बमानः ।
पूर्णैकात्मा पूर्णसंवित्स्वरूपः
श्रीमान् शास्त्रे भैरवोऽसौ निरुक्तः ॥'

इत्यादि । अर्थान्तरनिर्वचनान्यग्रे यथावसरं विवरिष्यन्ते । एकत्रैव तेषां समुच्चयाद् ग्रन्थविस्तरो विरसावहः प्रसज्येत । एवमत्र भैरवी-शब्देन महती शाक्तभूमिः परामृष्टेति सहृदया विचिन्वीयुः । ह्रींका-रीति स्वरादेराकृतिगणत्वाद् ह्रीमित्यस्याव्ययत्वम् । अस्यार्थस्तु का-दिमते भगवतातिरहस्यत्वाद् व्याकुलाक्षरश्लोकेन प्रकाशितः । यथा—

'त्वं कामाम्ना न प्रशव्यो नानमसग्निमात्वग्ररोम ईयो कार्विशंतनं-तफान्मुलनान्निवि' इति ।

अत्राद्येन व्योमाक्षरेण परप्रकाशात्मनः परशिवस्येतरप्रकाशनैरपे-क्ष्येण प्रस्फुरद्रूपत्वं । द्वितीयेनाग्न्यक्षरेण स्वस्वातन्त्र्यान्मुकुरप्रतिबिम्ब-वत्स्वान्तरवभासितस्य विश्वस्य स्वात्मसात्कारित्वम्, तुर्यस्वरेण शिव-

शक्तिसंमेलनात्मकसंघट्टीभावपरामर्शनं, बिन्दुनाविभागप्रकाशात्मना तयोरैक्यप्रतीतिः पारमार्थ्यनिर्णीतिश्चाविधीयते, इत्येवमर्थपरत्वेन सृष्टिस्थितिसंहारेषु स्वातन्त्र्यं पर्यवस्यति। तान्करोतीति ह्रींकारी। कर्मण्यण्। अणन्तात् ङीप्। यद्वा ह्रीं लज्जां करोतीति वा, अथवा ह्रीमिति हृल्लेखाबीजं वर्णात्कारप्रत्ययः। गौरादेराकृतिगणत्वात् ङीप्। भुवनेश्वरीबीजस्वरूपेत्यर्थः। त्रिपुरेति त्रयाणां मातृमानमेयानामात्मादितत्त्वानां वा पुरं नगरी तदात्मिका। यद्वा त्रीणि विद्याकूटानि पुरं यस्यास्त्रिकूटात्मविद्याश्रयेत्यर्थः। अथवा त्रीन् प्रत्यक्षानुमानागमान् प्रमाणाभिधान् पुरत्यग्रतो गच्छति तदविषयत्वादिति वा, तौदादिकस्य पुरधातो रूपम्। मूलविभुजादेराकृतिगणत्वात्क प्रत्ययः। तदुक्तम्—

'स्वपदा स्वशिरच्छायां यद्वल्लङ्घितुमीहते।
पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला॥'

इति। 'विज्ञातारमरे केन विजानीयादि'ति श्रुतिः (बृ० उ० २-४-१४)। परापरमयीति 'विप्राः क्षोणिभुजो' इति श्लोके व्याख्यातम्। अथ च परापरं स्वातन्त्र्यमनन्यमुखप्रेक्षित्वात्मकम्। तद्धि सदाशिवादिभूमौ पश्यन्तीदशायामिदन्ताप्रत्यवमर्शस्य ध्यामलाध्यामलत्वेनोद्बोधमात्रत्वेऽपि अहंभावविश्रान्तिकं तन्मयीत्यर्थः। यद्वा परमेश्वरस्य पराद्यास्तिस्रः शक्तयो यः सकलादिप्रमातृसप्तकभावस्फुरणदशायां त्रिधा मातृमानमेयभावमाश्रयन्ते तत्र परांशस्य प्रमेयत्वं व्यवस्थापितम्। तेषु यत्परापरसंज्ञकं प्रमाणं तत्सप्तविधेषु प्रमातृषु स्वस्वौचित्येन ज्ञानक्रिययोः साधकतमं करणं शक्तिरित्युच्यते। तयैव सर्वप्रमातृणां ज्ञत्वकर्तृत्वसयोजवियोजनानुसंधानादिस्वातन्त्र्यलाभः। तद्रूपा त्वमसि। तदुक्तं श्रीतन्त्रालोके—

'तथाहि तिस्रो देवस्य शक्तयो वर्णिताः पुरा।
ता एव मातृमामेय त्रैरूप्येण व्यवस्थिताः॥
परांशो मातृरूपोऽत्र प्रमाणांशः परापरः।
मेयोऽपरः शक्तिमांश्च शक्तिः स्वं रूपमित्यदः॥' (तं० १० ७-८)

इति । तद्विवरणं यथा तत्रैव—

'सकलस्य प्रमाणांशो योऽसौ विद्याकलात्मकः ।
सामान्यात्मा स शक्तित्वे गणितो न तु तद्भिदः ॥
लयाकलस्य मानांशः स एव परमस्फुटः ।
ज्ञानाकलस्य भानं तु गलद्विद्याकलावृति ॥
अशुद्धविद्याकलनाध्वंससंस्कारसंगता ।
प्रबुभुत्सुः शुद्धविद्यामन्त्राणां करणं भवेत् ॥
प्रबुद्धा शुद्धविद्या तु तत्संस्कारेण संगता ।
मानं मन्त्रेश्वराणां स्यात्तत्संस्कारविवर्जिता ॥
मानं मन्त्रमहेशानां करणं शक्तिरुच्यते ।
स्वातन्त्र्यमात्रसद्भावा या त्विच्छाशक्तिरैश्वरी ॥
शिवस्य सैव करणं तया वेत्ति करोति च ।' (तं० १०-१२-१७)

इति, 'मालिनीवार्तिके'—

'स्वप्रकाशात्मिका येयं संवित्तिः पारमार्थिकी ।
तत्स्वसंवेदनं प्रोक्तं यतो विश्वव्यवस्थिति ॥
सा चैषा न विमर्शात्मस्वरूपमतिवर्तते ।
विमर्शोऽस्या परो भागः[1] पूर्णः पश्यन्त्यु[2]दाहृतः ॥
परापरा सैव देवी मानमित्यवधार्यताम् ।
यत्रापरांशगं मेयं तादात्म्याद् व्यवतिष्ठते ॥
नहि भिन्नेन मानेन मेयस्य स्याद् व्यवस्थितिः ।
नहि हंसस्य शुक्लत्वे काकः श्वेतत्वमर्हति ॥
एतदेव तथा चाह गुरुः शंकरनन्दनः ।
न मानत्वात्ततोऽन्यत्वान्न बाधादस्थितेः स्थितिः ॥
प्रकाशेनाविनाभूतैः सत्तायां नियतात्मभिः ।

1. 'भोगः' मु०पु० पाठः । 2. 'पश्यन्त्युदाहृता' मु०पु० पाठः ।

धर्मैर्भावो बहिर्भावान्न भावः सिद्धिमृच्छति ।।
तेन संवित् [1]त्रिकात्मैव मातृमानप्रमेयताम्[2] ।
गृह्णती स्वप्रकाशत्वस्वभावादेव भासते ।।
सा चान्तः स्थितमन्त्रात्मशब्दनामर्शसुन्दरा ।
अनपेक्षान्यविरहात्प्रमाणं स्वत एव हि ।। (प्र० का०, ४२७-४३४)

इति । तत्रैवान्यत्रापि—

'इत्थं प्रमाणताभागि यत्तत्वं हि न्यरूप्यत ।
परापरा भगवती सेयं भाति तथा तथा ।।'

इति । अथ च परापरो हि विज्ञानकलादिसंज्ञकः प्रमाता तद्रूपा । यदाह वार्तिके—

'परापरस्तु यो माता समुद्रिक्तपरापरः ।
स विज्ञानकलः प्रोक्तः प्रबुद्धपरभावकः ।।
अपरोद्रेकयोगेन स एव प्रलयाकलः ।' (प्र० का० ९५७-९५८)

यद्वा परापराः शिवशक्तयो घोराख्या या अहन्ताच्छादितेदन्तोन्मज्जनेनानाश्रितसदाशिवेश्वरादिरूपभेदाभेदात्मप्रथाप्रदायिन्यस्तद्रूपासि । तदुक्तं 'मालिनीविजये'—

'मिश्रकर्मफलासक्तिं पूर्ववज्जनयन्ति याः ।
मुक्तिमार्गनिरोधिन्यस्ताः स्युर्घोराः परापराः ।।' (३२ श्लो०)

इति । एवं परापरो विसर्गो भेदाभेदावस्थितिर्विद्यातत्त्वं चेत्याद्यर्थव्यवस्थितिर्बहुशो गुरुमुखगम्येति । असह्यदुःखदशादिषु प्रायशो च लोके जनकापेक्षया जनन्या एवाशङ्कितंनामोदीर्यते इति प्रसिद्धम् । तत्र परिवर्तमानानेकजन्मानुभूतमातृणां त्रिविधतापापहरणासम्भवाद्वर्तमानानामपि तदक्षमत्वादतः प्राधान्येन मातृत्वस्य देव्यामेव निरूढेः

1. 'त्तिकात्मैव' मु०पु० पाठः । 2. 'प्रमेयता' मु०पु० पाठः ।

स्वस्मिंस्तस्या दयालुतासंपादनाय तच्छब्दस्तोतव्यतामुद्दिश्याह मातेति। दुरन्तदुःखविनाशिनी ब्रह्मादिस्तम्बपर्यन्तचतुर्दशविधजन्तुवर्गजनयित्री वेत्यर्थः। कदाचित्पित्रापि ताडितस्य बालस्य मात्रैवोपलालना क्रियते इति हि प्रसिद्धिः। तदुक्तम्—

'पित्रा निर्भर्त्सितो बालो मात्रैवाश्वास्यते किल' इति यद्वा—'न विद्या मातृकापरा' इत्याम्नायोक्त्या स्वान्तः क्रोडीकृताशेषवाच्यवाचकत्वादखिलविद्याविसर्गारणिभूता मातृकारूपा। तदुक्तम्—

'मन्त्राणां मातृभूता तु मातृका परमेश्वरी।'

इति, तद्विवरणं श्रीपरात्रिंशकादिशास्त्रेषु प्रकाशितम्। शिवसूत्रेष्वपि 'मातृका चक्रसम्बोधः' (२-७) इत्यत्र क्षेमराजपादैर्विवृतम्। अथ च दशमीतिथिनित्यामन्त्रस्य मातेति संज्ञा तद्रूपा कुलसुन्दरीत्यर्थः। सा च बालैव, एतच्च दर्शयिष्यते। यद्वा देशाद्यवच्छिन्नक्रमयौगपद्यादिविचित्रभावजातोपरक्तत्वेऽपि तदनवच्छिन्नाक्रमचिदानन्दनिर्भरसंविन्मात्रमूर्तिः स्वतन्त्रपरप्रमातृरूपा मातेत्यर्थः। तदुक्तम्—

'या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः॥'

इति। तथा कुः पृथिवीतत्त्वं म्रियते लीयते यस्मिंस्तत्कुमारं कुलकुण्डमाधारसंज्ञकं तत्सम्बन्धिनी कुमारी कुलकुण्डलिनी तद्रूपा 'यत्कुमारी मन्द्रयते यद्योषिद्यत्पतिव्रतेति' श्रुतेः। अथ च कुं भेदप्रथोन्मेषिणीं मायाभूमिं मारयति अनुद्भिन्नप्रसरां करोति तच्छीला। यद्वा कुमारयति विश्वसर्गादिक्रीडां रचयतीति पारमेश्वरी पराभट्टारिकोमा नाम शक्तिरन्यानुपभोग्या कामेश्वरैकात्म्येन परिस्फुरन्ती च। तथा च शिवसूत्रम्—

'इच्छाशक्तिरुमा कुमारीति' (१-१३)।

तद्वार्तिकं च—

'तस्यैव योगिनो येच्छा शक्तिः सैव भवत्युमा ।
पराभट्टारिका सैव कुमारीति प्रकीर्तिता ॥
सदाशिवादिक्षित्यन्तविश्वसर्गादिलीलया ।
कुमारी कुं महामायाभूमिं मारयतीत्यपि ॥
कुमारी चोपभोग्यास्य योगिनो भैरवात्मनः ।
कुमारी नान्यभोग्या स्याद्भोक्त्रैकात्म्येन तिष्ठति ॥
उमा कुमारी संत्यक्तसर्वसङ्गा महेशितुः ।
आराधनपरा तद्वदिच्छाशक्तिस्तु योगिनः ॥' (शि० सू० वा० ६७-७१)

इति । 'स्वच्छन्देऽपि'—

'सा देवी सर्वदेवीनां नामरूपैश्च तिष्ठति ।
योगमाया प्रतिच्छन्ना कुमारी लोकभाविनी ॥'

इति । कुमारी द्वीपरूपा वा, बालारूपा वा, इत्येवंस्वरूपा त्वमसि ।
अथ मन्त्रपारायणक्रमविवरणम्—

माया ह्रीं, कुण्डलिनी ऐं, क्रिया क्लीं, मूलविद्यानन्तरमेतैः प्रत्येकं क्रमेण योजिता पृथक् पृथक् । मधुमती चतुर्विधा मातृका शुद्धा बिन्दुयुक्ता विसर्गयुक्ता बिन्दुविसर्गयुक्ता चेति । कालीत्यादीनि दशविद्यानामानि तैर्मधुमत्यनन्तरं क्रमशो योजिता तदनु शक्तीत्यादि दशविद्याः क्रमशः संयोज्य मन्त्रपारायणविद्याः सम्पद्यन्ते । तत्र (१) शक्तिः श्रीबालातृतीयबीजं सौः इति । (२) शङ्करवल्लभा रुद्रशक्तिः हस्रीं स्ह्रीमिति । (३) त्रिनयनेति नेत्रस्थानोपलक्षितत्वात् वौषडिति । (४) वाग्वादिनी आहेति विद्या । (५) भैरवी हसरैं हसक्लरीं हस्रौं । (६) ह्रींकारीति स्वरूपं भुवनेश्वरीबीजम् । (७) त्रिपुरा श्रीसौभाग्यविद्या (ह ५ ह ६ स ४) । (८) परापरमयी शिवशक्तिमयी विद्या हस्रौं सह्रौमिति । (९) माता षट्कूटाविद्या हसकलरडैं हसकलरडीं हसकलरडौं इति । (१०) कुमारी बालाविद्या सा चाद्यश्लोकोद्धतत्वात्प्रसिद्धैव ।

एवमेतेषामुक्तानां दशमन्त्राणामन्योन्यविमिश्रणया पारायणक्रमः साधकानां जपोपयोगी यथा प्रदर्श्यते तत्र प्रातरुत्थायाह्निकक्रियां विधाय विविक्तप्रदेशे स्वासने समुपविश्य गुरुगणपतिपरदेवताः प्रणम्य मूलविद्यया ऋष्यादिस्मरणपूर्वकं करषडङ्गन्यासौ कुर्यात् । ततः स्वेष्टदेवीं ध्यायन्मानसोपचारैः संपूज्य देवतात्मको भूत्वा मन्त्रपारायणजपं दशभिर्दिनपर्यायैः समापयेत् । तत्राद्यदिने मूलं ह्रीं अकाली सौः । एवं मूलं ह्रीं अकाली सौः । इत्यादिक्रमेण शुद्धमातृका योजनायामेकपञ्चाशत् (५१) जपसंख्या । पुनरेवं सबिन्दुमातृकायोजनायां संख्या (५१) । पुनरेवं सविसर्गमातृकायोजनायां जपसंख्या (५१) । पुनः सविसर्गबिन्दुमातृकामिश्रणायां संख्या (५१) । एवं मायाबीजेन सह चतुरधिकं द्विशतं मन्त्राः (२०४) । मायाबीजस्थाने कुण्डलिनी बीजं वाग्भवाख्यं संयोज्य तेन सह चतुर्विधमातृकाक्षरैः पूर्ववन्मन्त्रसंख्याः (२०४)। पुनरादौ क्रियाबीजं कामराजाख्यं संयोज्य प्राग्वन्मन्त्रसंख्या (२०४)। एवं संकलय्य मन्त्रा (६१२) द्वादशाधिकं षट्शतम् । पुनः कालीनामस्थानीयं कलानाम विधायावशिष्टं सर्वं प्राग्वदिति कृत्वा सैव (६१२) संख्या । इत्थं प्रतिनामेति (६१२०) विंशत्यधिकशतोत्तरषट्सहस्राणि मन्त्रभेदाः । एवमेकदिनपर्यायः । द्वितीयादिपर्यायेषु प्रदर्शितक्रमस्यान्त्ये केवलं शक्तिस्थाने शङ्करवल्लभादिविद्यासु संयोजितासु मन्त्रा द्विशताधिकान्येकषष्टिसहस्राणि स्युः । उक्तरीत्या लक्ष्मीजयादिनाम्नां समनन्तरश्लोकोक्तानामपि कालीत्यादिस्थाने संयोजनाच्चतुरशीत्यधिकद्विचत्वारिंशन्मनवोऽधिका भवन्ति । तथा चैकदिनपर्याये (६५४८४) संख्याः यदि दशभिर्दिनैः कर्तुमशक्तस्तदैकाहजपं पञ्चधा विभज्य पञ्चाशताहोभिर्जपं कुर्यात् । तदशक्तावपि एकैकनाम्ना शताहेन समापनीय इति सत्सम्प्रदायः । अस्य जपस्य नामपारायणोक्तफलसाम्ये पृथक् फलानुक्तिः । तदुक्तम्—

'एवं यः कुरुते नित्यं नामपारायणं बुधः ।
भुक्त्वेह भोगानखिलानन्ते देवीपदं व्रजेत्' इति ॥ १८ ॥

अथेदानीं कालनित्याविद्याक्रमं सूचयन् नामपारायणजपपरिपाटीं च प्रणतिनिभेनाह—

आईपल्लवितैः परस्परयुतैर्द्विद्विक्रमाद्यक्षरैः
काद्यैः क्षान्तगतैः स्वरादिभिथो क्षान्तैश्च तैस्सस्वरैः ।
नामानि त्रिपुरे ! भवन्ति खलु यान्यत्यन्तगुह्यानि ते
तेभ्यो भैरवपत्नि ! विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९ ॥

हे त्रिपुरे ! भैरवपत्नि इति सम्बोधनं वक्ष्यमाणत्र्यक्षरात्मकत्रैपुरविद्याधिष्ठातृदेवतार्थाभिप्रायेण, तेन हे त्रिपुरभैरवि ! यथोक्तं श्री-'त्रिपुरार्णवे'—

'अक्षरान्तर्गताशेषनामरूपां क्रियां पराम् ।
शक्तिं विश्वेश्वरीं वन्दे देवीं त्रिपुरभैरवीम् ॥'

इत्यादि । अस्यापि शब्दस्यावयवशोऽर्थः प्राङ्निर्णीतोऽग्रेऽपि निर्णेष्यते । अथ च भैरवोऽद्वैतात्मकविश्वासकवलनस्वभावः परप्रकाशस्तस्य स्वभावभूता समवायसंयुक्तत्वाद्धृदयाख्या परास्वातन्त्र्यशक्तिस्तद्विधेयकृत्यसंपूरयित्री । तदुक्तं 'भर्गशिखायाम्'—

'मृत्युं च कालं च कलाकलापं
विकारजालं प्रतिपत्तिसात्म्यम् ।
ऐकात्म्यनानात्म्यविकल्पजातं
तदा स सर्वं कवलीकरोति ।'

इति । 'वीरावल्यामपि'—

'यत्र सर्वे लयं यान्ति दह्यन्ते तत्त्वसंचयाः ।
तां चितिं पश्य कायस्थां कालानलसमत्विषम् ॥'

इति । एवम्भूता भैरवसंविदिति पत्नीशब्देन सततसंयोगाविच्छेदं लक्षयताभिधीयते । शिवसूत्रेष्वपि—

'शक्तिचक्रसंधाने विश्वसंहार:' (१-६)

इति। अर्थान्तराण्यग्रे व्याख्यास्यन्ते। अत्र प्रदर्शयिष्यमाणासु त्रिपुराविद्यासु प्रतिवर्णं पूर्णमण्डलवर्णाः षट्सप्तत्यधिकपञ्चशतसंख्याकास्तेषु विद्यानां प्रथमे षट्त्रिंशत्तत्त्ववर्णा वाग्भवबीजत्वेन स्थिताः। द्वितीया वर्णाः कामराजबीजात्मकास्ते च आ ई इत्याकारेण कृतसन्धिकाः। तृतीयास्तु शक्तिबीजात्मकाः। एवं ता विद्याः षट्त्रिंशदधिकसप्तशतोत्तरं विंशतिसहस्राणि (२०७३६) सम्भवन्तीति। तदुक्तं कादिमते—

'पूर्णमण्डलवर्णाः स्युः प्रथमे त्वादितः क्रमात्।
षट्त्रिंशत्तत्त्ववर्णास्तद् द्वितीया मरुता क्रमात्॥
तृतीयाः सर्वतो वह्निरेवं विद्यास्तु त्र्यक्षराः।
त्रिपुराः सर्वसिद्धानामाकराः कथिताः क्रमात्॥' (प० २५ १७-१८)

इति। तासां विनियोगः फलं च तत्रैव—

'एताः पुस्तकमारोप्य पीठे संस्थाप्य पूजयेत्।
यत्र तत्र गदालक्ष्मीग्रहदुर्भिक्षशात्रवाः॥
भूतापमृत्युकृत्याद्या न भवन्ति पुरादिके।
अभीप्सितानि सिद्ध्यन्ति तस्य योऽर्चति नित्यशः॥
षट्त्रिंशत्सप्तशतं सहस्राणि च विंशतिः।
तासां संख्या समाख्याता तदावृत्तिस्तदाप्तिकृत्॥' (१७-२१)

इत्येतदखिलमाशयं गर्भीकृत्योक्तविद्यासम्पादननिर्णयो यथा—काद्यैः क्षान्तगतैः ककारादिभिः क्षकारपर्यन्तैः पञ्चत्रिंशत्संख्याकैरक्षरैः। कीदृशैः स्वरादिभिः स्वरशब्देनात्र प्रथमस्वर एव गृह्यते। तेन स्वरोऽकार आदिः प्रथमो येषां तैः षट्त्रिंशद्व्यञ्जनैः षटत्रिंशत्तत्त्वसतत्त्वैरित्यर्थः। महानित्यायाः शिवशक्त्यात्मकत्वेनोभयात्मकत्वात् तदात्मकस्य प्रथमस्वरस्यापि स्वरव्यञ्जनात्मकत्वेनोभयात्मकत्वमस्तीति तान्त्रिकोपह्वरः। तदुक्तं तत्रैव—

'अथ षोडशनित्यानां षट्त्रिंशत्तत्त्वविग्रहैः ।
वर्णैस्तज्जनितैर्मन्त्रैर्यन्त्रैः कालात्मतां क्रमात् ॥
कथयामि प्रयोगांश्च नानाभीष्टाप्तिकारणान् ।
यज्ज्ञानोपास्तिभेदाभ्यां मन्त्राः सिद्ध्यन्ति वर्णिनः ॥
स्वराः षोडश नित्याः स्युः कादिक्षान्ताः स्वरान्विताः ।
तेषु तत्त्वानि षट्त्रिं[1]शद्वर्गानाथा नवात्म[2]काः ॥ (२५ प० १-३)

इति । तथा आ ई पल्लवितैः आई इति शब्दशिरस्कैर्द्विद्विक्रमात् द्वि द्वि वर्णक्रममाश्रित्य परस्परयुतैरन्योन्यं कृतसन्धिकैः कामराजसंज्ञकस्य द्वितीयवर्णस्याकारेण सह प्रतिविद्यं विहितसंहितैरित्यर्थः । तथा स्वरादिभिरित्यावृत्त्य स्वराः षोडशादौ येषामिति कृत्वा, अ आई अकाई इत्यादि, अक्षाई इत्यन्तम् । एवं आ आई आकाई इत्यादि आक्षाई इत्यन्तम् । एवं आक्षाई इत्यादि अः क्षाई इत्यन्तं तावन्नाम्नां संख्या (५७६) षट्सप्तत्युत्तरपञ्चशतानि । अथ तैः काद्यैः क्षान्तैः पुनः पञ्चत्रिंशद्व्यञ्जनैः सस्वरैः षोडशस्वरसंयोजितैः ककाकिकीत्यादिक्रमरूपैर्विद्याद्यवर्णस्थानीयैः पूर्ववन्मध्यसंहितापुरःसरं कआई ककाई कखाई इत्यादि कक्षाई इत्यन्तम् एवं काआई काकाई काखाई इत्यादि काक्षाई इत्यन्तम् । एवं क्षः आई इत्यादि क्षः क्षाई इत्यन्तं तावन्नाम्नां संख्या (२०१६०) षष्ट्यधिकशतोत्तरविंशतिसहस्राणि । एवं पूर्णमण्डलवर्णैरुत्पद्यमानानि ते तव यान्यत्यन्तगुह्यानि रहस्यातिरहस्यानि खलु नामानि श्रैपुरविद्यारूपाणि भवन्ति संख्यया विंशतिसहस्रेभ्यः परेभ्योऽतिरिक्तेभ्यस्तेभ्यो नमस्ता विद्याः प्रणम्या इत्यर्थः । एवं समुचिता तत्संख्या (२०७३६) एतत्प्राक् संवादितम् । एतज्जपविधिः श्रीमदाराध्यमुखादेवावगन्तव्यः । श्रीदेवीरहस्ये तु—

'आईविभूषितां कृत्वा मातृकां हंसभूषिताम् ।
मूलविद्यां जपेन्मन्त्री शिवशक्तिमयीं शिवे ॥'

---

1. षट्विंशद्वर्गा 2. नाथ नवात्मिकाः, आर्थरअवलानसम्मुद्रिते

इति । तदत्रायं क्रमः—'आदौ मूलविद्यां तदनु कालविद्यां हंसान्तामुच्चरेदिति'। दिननित्याविद्यायाः परिज्ञानं ज्योतिःशास्त्रोक्तनीत्या कल्यहर्गणं विधाय कालविद्यासंख्यया प्रोक्तया भागे हृते लब्धान् गतपर्यायान् परित्यज्यावशिष्टदिनसंख्यां पूर्णमण्डलसंख्यया विभज्य लब्धेन सैकेन गणनात् तद्दिननित्याया आद्यक्षरं संजायते । शेषे षट्त्रिंशता विभक्ते लब्धं सैकं कृत्वा तत्परिमितस्वरोपेतमाद्यक्षरं कुर्यात् । अवशिष्टसंख्यापरिमितं द्वितीयाक्षरमाईयुक्तं विधाय तद्दिननित्या भवति । एवं संजातायास्तद्दिननित्याविद्यायाः प्रथमाक्षरं यत्स्वरयुक्तं स्यात् तत्स्वरादितः पुनस्तत्स्वरपर्यन्तं प्रागुक्तप्रकारेण जपो विधेयः । एता एव तत्त्वनित्या इति ज्ञेयम् । पर्यायनित्याक्रमस्तु—दीक्षादिनमारभ्याहर्गणगणनया प्राग्वद्बोध्यः । एवं वर्तमाने कलियुगे आदित आरभ्यैकैकस्य दिवसस्यैकैका विद्या यथाक्रमं भवति । तत्र पूर्णमन्त्रपारायणपरिवृत्तितस्तद्युगान्ते केषुचिदवशिष्यमाणेष्वहःसु प्रत्यहं द्वे द्वे विद्ये पूरणीये भवतः । तदुक्तं श्रीतन्त्रराजे—

'कृतादीनां युगानां तु दिनेष्वेकैकशः क्रमात् ।
ता विद्यास्तत्स्वरूपिण्यः शेषास्त्वन्ते द्विशः स्मृताः ॥'(ष० २५-२५)

इति । एतत्सर्वं तट्टीकायां मनोरमाकारैर्विस्तरेण प्रदर्शितमित्यलं विस्तरेण ॥ १९ ॥

एवमाचार्यः स्तुतिमुपसंहरन् सतां तदवधेयतायां हेतुविशेषं निर्दिशति—

बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं
भारत्यास्त्रिपुरेत्यनन्यमनसो[1] यत्राद्यवृत्ते स्फुटम् ।
एकद्वित्रिपदक्रमेण कथितैस्त्वत्पादसंख्याक्षरै-
र्मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः ॥ २० ॥

---

1. 'मनसा' इति पाठान्तरम्

त्रिपुरेति पूर्वपदसाहित्येन प्रसिद्धाया भारत्यास्त्रिपुरभारत्याः। अस्यां विद्यायां हि प्रायशस्त्रिष्वपि कूटेषु बीजांशाक्षराणामुपास्तावपि वाक्-सूक्तिप्रसरस्फुरणात्मकस्य फलस्य प्राधान्येनान्वितत्वादिति। अत्र भारतीयपदप्रयोगः साभिप्रायः। इयं समनन्तरोक्ता स्तुतिर्बुधैर्भारतीप्रसादासादनीयनिरर्गलप्रसरत्सूक्तिपदगुम्फैरत एव तत्प्रसादाभीप्सुभिः सद्भिस्तद्गतं त्रिपुरभारतीलग्नं मनः कृत्वा निपुणं यथा स्यात्तथा बोद्धव्या लोचनीया। बुधैरित्यनेन तेषामेव झटिति मन्त्रोद्धारज्ञानक्षमत्वं न मन्दमतीनामिति ध्वनितम्।

ननु किमेतदवगतावvधाननैपुण्येनेत्याशंक्याद्यश्लोकरचनायां स्वस्य विच्छित्तिवैदग्ध्यं सूचयन् विशिष्टहेतुकत्वेन विशेषणमाह—अनन्येति-यत्र स्तुतावनन्यमनस अविद्यमानमन्यत्र मनो यस्य तस्य मद्विरचितायामस्यां स्तुतावेवावहितचेतसः साधकस्य पुंसस्तं प्रतीत्यर्थः। यद्वानन्यमनसो देव्यैकात्मचेतसो ममेयं स्तुतिरिति अस्मत्पदाध्याहारेणान्वेयम्। आद्यवृत्ते प्रथमश्लोके स्फुटमित्यभिधाशक्त्या नत्वाक्षेपादिना एकद्वित्रिपदक्रमेण प्रथमद्वितीयतृतीयपादानुपूर्व्या, अत्र द्वित्रिशब्दयोः पूरणप्रत्ययान्तार्थत्वं बोध्यम्। तत्पादसंख्याक्षरैस्तस्य वृत्तस्य पादसंख्यायास्तुल्यसंख्याक्षरै, अर्थादाद्यपद्ये ऐमित्याद्यक्षरात्मकत्वेन, द्वितीयपादे क्लीमिति द्वितीयाक्षरात्मकत्वेन, तृतीयपादे सौरिति तृतीयाक्षरात्मकत्वेन। अत्र हृस्थितेति विशेषणात् ह इति विसर्गस्तत्र स्थितेति कृत्वा सविसर्गत्वं लभ्यते। मन्त्रोद्धारविधिः प्रोक्तविद्योद्धारविधानं कथितो निर्दिष्टः।

नन्वयं मन्त्रोद्धारो बहुष्वागमेषु दर्शितस्ततोऽस्य को भेदः इत्यपेक्षायामाह विशेषेति। विशेषैस्त्रिपुराविद्याविशेषैः सहितस्ते च विशेषास्तत्रोद्धृताः। न चैतत्स्वोपज्ञमित्याह सत्सम्प्रदायेति। सन् निर्दोषत्वेन प्रशस्तश्चासौ सम्प्रदाय उपदेशपारम्पर्यं तेनान्वितो गुरुमुखाल्लब्ध इत्यर्थः। एवं सत्सम्प्रदायप्राप्तानामेव मन्त्राणामुद्धारो मयात्र कृत इत्यप्रामाण्यशंका निरस्ता। तेन परमशिवात्प्रभृति स्वगुरुपारम्पर्येण

विज्ञातस्य मन्त्रादेः साफल्यमन्यथानर्थपरम्परापातः इति सूचितम् । तदुक्तं वामकेश्वरे—

पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ।
तेषां समयलोपेन विकुर्वन्ति मरीचयः ॥

इति । अन्यत्रापि—

स्वयं गृहीतमन्त्राश्च क्लिश्यन्ते चाल्पबुद्धयः ॥

इति । अथ च यथा महाकविनिबद्धनाटकादिशास्त्ररचनात्मिकायाः सरस्वत्याः प्रस्तावनायां सन्दृब्धाभिनेयवस्तुसूचनालक्षणा स्तुतिरपि सहृदयैः सद्भिरेवानन्यमनस्कतया बोध्यते । यत्र मुख्यनायकचरितमुद्दिश्यैकद्वयादिभूमिकाग्रहणलक्षणपदानुक्रमेण नाटकीयाङ्कसंख्यापरिसमाप्त्युपलक्षितोऽभिनेतव्यमन्तव्यार्थप्रकाशनविधिः सविशेषं सत्कविसम्प्रदायार्थानुगतो विस्पष्टमुक्तः स्यादित्यर्थोऽपि समासोक्त्या गम्यते ॥ २० ॥

श्लाघ्याश्लाघ्यत्वसम्भावनामुपेक्ष्यैव ममास्यां कृतौ त्वद्भक्तिजनोपयोगोपकारादेव मदीया सूक्तिः सफलतामियात्तत्रापि मदीयत्वाध्यासोऽपि वस्तुतोऽध्यासजनितो भक्तिरसवैवश्येनैव मद्वाक्प्रसरस्य सम्भवादतो भक्तिरेव कर्त्री इत्याशयेनात्मगौरवं निरस्यन्नाह—

सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
संचिन्त्यापि लघुत्वमात्मनि दृढं संजायमानं हठा-
त्त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ॥ २१ ॥

भैरवपत्नीति पूर्वतमस्मात्पद्यादनुषञ्जनीयम् । इदं स्तोत्रं सावद्यं सरसत्वालङ्कारवत्वाभावात्सदोषमस्तु यदि वा निरवद्यमवद्येभ्य अनर्थकत्वश्रुतिकटुत्वादिभ्यः पदवाक्यार्थाश्रयेभ्यो दोषेभ्यो निष्क्रान्तत्वा-

त्सरसालङ्कारोपेतत्वेन च निर्दोषमस्तु। सम्भावनायां लोट्। अनया चिन्तया विचारणया वा किं निष्प्रयोजनतया न किञ्चिदित्यर्थः वेत्यप्यर्थे। कारकपरिणामेनोभयत्र वाक्ययोः स्तोत्रमिति योज्यम्। तत्र हेतुमाह—यस्य जनस्य त्वयि निरतिशयप्रेमलक्षणा भक्तिरस्ति। नूनं निश्चयेन स जनः स्तोत्रमिदं पठिष्यति पठिष्यत्येव। नात्र विपर्ययाशंका। जननादित्रासभीरुत्वात्तस्येति जनशब्दद्योत्यम् इत्येतावतैव मत्कृतिसाफल्यं स्यात्। एवं भक्तिमद्भिरवश्यग्राह्यमेतत् न खलु महाकविनिर्माणवदत्र सदोषनिर्दोषत्वपर्यालोचनापुरःसरं हानसमादानबुद्धिकलना काचित्।

ननु निरवद्यकवित्वनिर्माणादिना कर्तुः कर्तृतागौरवातिशयः स्यादित्यत आह—संचित्येति। यस्मात्त्वद्भक्त्या त्वद्विषयिण्या भक्त्या हठात्सहसा विवेकमकृत्वैव मुखरीकृतेन वाचालतां नीतेन मयापि मन्दमतित्वात् स्तोतुमनर्हेणापि स्तोत्रमिदं रचितं सम्पादितमिति संचिन्त्याप्यतो हेतोरात्मनि मयि दृढं निर्भरं लघुत्वं प्रयोज्यकर्तृत्वेन कर्तृत्वोपचारलक्षणं लाघवं ध्रुवमसंशयमिति कृत्वा संजायमानमस्त्युत्पद्यते इत्यर्थः। भक्तिरेव प्रयोजकीभूय मां स्वविवशं विधायैतद्विरचनाय प्रयोजितवतीत्यतः स्तुतिकर्तृत्वगौरवस्य निरस्तत्वात् 'रथो गच्छति' इतिवन्मयि गौणकर्तृत्वं लज्जाभरावहमिति यावत्।

यद्वा, ननु कथं न निर्दोषत्वादिविचारः शक्यक्रियः स्यादित्यत आह—यतो हेतोस्त्वद्भक्त्या हठान्मुखरीकृतेन वैयात्यं नीतेन सता मयापि स्वात्मनि बुद्धौ दृढमत्यर्थं संजायमानमुत्पद्यमानं लघुत्वं स्तुतिविरचनंचातुर्यचपलत्वं संचित्यापि पर्यालोच्यापि रचितं कृतमिदमतो निरवद्यतादिकलनायां मम प्रधानोद्देश्यत्वाभाव इति। अस्मिन् ग्रन्थे तत्त्वतः पर्यालोचनायां क्रियमाणायां 'स एष रसानां रसतमः' इति (छांदो० १-१-३) श्रुतौ श्रूयमाणे मुख्यरसतत्त्वः पूर्णाहन्ताचमत्कारनिर्भरप्रकाशानन्दघनसंवित्परमार्थस्तत्समावेशलक्षणभक्तिरसोऽपि सहृदयैस्तत्समावेशशालिभिर्विम्रष्टुं शक्यः। ततश्चात्र मुख्यतया देवताविषय-

रत्युत्कर्षतायां भावलक्षणो भक्तिरसो व्यज्यते। तदङ्गत्वेन रसान्तराणि शान्तकरुणाद्भुतादीनि शब्दार्थालङ्काराश्च तज्ज्ञैर्यथासम्भवमूह्यानि। तद्यथा—

'दृष्ट्वा सम्भ्रमेति' 'यत्सद्यो वचसामिति' 'एकैकं तवेति' 'ये त्वां पाण्डुरेति' 'देवानामिति' एतेष्वद्भुतरसाभिव्यक्तेः। 'यन्नित्ये इति' 'विप्राः क्षोणीति' एतयोः कारुण्यरसोपलब्धेः, 'वामे' इति शान्तरसानुभवस्य, 'ये सिन्दूर' इति विप्रलम्भश्रृङ्गारस्य, 'चञ्चत्काञ्चने'ति श्रृङ्गाराद्भुतयोः' 'आर्भटयेति' सम्भोगश्रृङ्गारशान्तयोः, 'जातोपी' त्यद्भुतवीरयोः, 'चण्डीति' 'लक्ष्मीं राजकुले' इत्येतयोर्भयानकस्य, 'शब्दानामि' त्यद्भुतभयानकयोः, अन्यत्र भावात्मनः संभवात्। आद्यन्तयोर्भक्तिरसेनैवोपक्रमोपसंहाराभ्यामन्तरालवर्तिनां तत्रैव तात्पर्यप्रतीतिरिति ज्ञेयम्। एवमुपमादयोऽर्थालङ्कारा अनुप्रासादयः शब्दालङ्काराश्च बोध्याः। स्तुतिकृता चात्र स्वात्मनि लघुत्वस्याविष्क्रियमाणत्वाल्लघुशब्दस्य प्रयुज्यमानत्वाद्वा शीघ्रताकरणाद्वास्याः स्तुतेः लोके 'लघुस्तव' इति प्रसिद्धिरिति शिवम् ॥ २१ ॥

इति श्रीधर्माचार्यविरचितायां पञ्चस्तव्यां लघुस्तवे
श्रीमहामाहेश्वरपण्डितहरभट्टशास्त्रिकृता
टीका सम्पूर्णा ॥

यत्र त्रैपुरकन्दसंज्ञकमनुं मूलं व्यवष्टब्धवान्
अत्यर्थं कुलसुन्दरीमनुतरुः शाखोपशाखाततेः।
उत्फुल्लो विविधै रसोद्धुरफलैः संपूरयन् स्वाश्रितां-
स्तस्मिन् प्राथमिके स्तवे विवरणं पूर्णं परानुग्रहात् ॥ १ ॥



# पञ्चस्तव्यां चर्चास्तवो द्वितीयः

प्रायः पन्था बहुलविधिगो धाम्नि शाक्तेऽधिशायी
पुंसां तत्तत्फलनिवहदो ध्यानवीर्याधिरूढेः ।
नो वा पुंधामनि जडपदे निष्फले नो परस्मिन्
इष्टाप्त्यै तत् स्फुरदुरुफला चर्च्यते कापि वल्ली ।।

इदानीं द्वितीयं चर्चास्तवमुपचिक्रमिषुराचार्यो निर्विघ्नसमाप्तिकामत्वेनाम्बायाः पादकमलं वीरशृङ्गाररसो (मकरन्दो) पश्लिष्टत्वेन परामृशति ।

ॐ नमस्त्रिपुरसुन्दर्यै—

आनन्दसु[1]न्दरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १ ॥

अम्बिका नाम परिपूर्णाहम्भावात्मस्फुरणावलोकनचतुरा सर्वातिशयत्वशालिनी परावाक् शक्तिः । तदुक्तं चतुःशत्याम्—

'आत्मनः स्फुरणं पश्येद्यदा सा परमा कला ।
अम्बिकारूपमापन्ना परा वाक्समुदीरिता ।।'

---

1. 'मन्थरे' तिपाठान्तरम्

इति। श्रीप्रत्यभिज्ञायामपि—

'चितिः प्रत्यवमर्शात्मा परा वाक्स्वरसोदिता' (१-५-१३)

इति, तस्य अम्बिकायाः शक्तेर्विश्वजनन्याः पादाम्बुजं पादश्चरणमेव मार्दवसौरभादिगुणयोगादम्बुजं कमलं मे मम विजयाय विजयं विश्वोत्कृष्टपदलाभमवाप्तुं भवतु भूयादित्याशंसायां लोट्। विजयायेति 'तुमर्थाच्च भाववचनात्' इत्यनेन सम्प्रदानत्वम्। अथ च विजयः सर्वनियन्तृत्वं तत्प्राप्तये इत्यर्थः। 'या ब्राह्मणो जितिर्या व्युष्टिरि'त्यत्र कौषीतक्युपनिषच्छ्रुतावाचार्यैस्तथा व्याख्यातत्वात्। एवमग्रेऽपि यथार्थसंगत्या जयपदोदीरणेऽर्थो बोध्यः। अत्र प्रकृतपादप्रहारोपयोगित्वेन प्रायो दक्षिणस्यैव दाक्षिण्यप्रसिद्धेर्दक्षिणं पादकमलं ज्ञेयम्।

यद्वा—रणे ससंरम्भव्यापारासक्त्या सहसा प्रहारदानावसरापातेऽविशेषेण सव्येतरपादयोरन्यतरो ग्राह्यः। अथवा महिषासुरमर्दनमेकस्यैव पादस्य कर्म, इति वीरकर्माविष्करणम्, इत्यभिप्रायेणैकवचनोपन्यासः। कीदृशं महिषासुरस्य मौलौ किरीटे। यद्वा मौलिनोपलक्षिते शिरसि हठेन साहसेन निहितं कृतप्रहारं, येन सोऽसुरो रणे जीवितावसानमगात्। अतः

'शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजा।'

इति ब्रह्माण्डोक्त्या तत्काले पादाम्बुजे शिञ्जितारावोत्पत्तेरौचित्यसद्भावात् मञ्जुभिर्मनोज्ञैर्मञ्जीरशिञ्जितैर्नूपुरादिझणत्कारैर्मनोहरं स्वभक्तानां हृदयावर्जकं विपक्षाणां हृद्भङ्गकारि च। तथा दुर्जयारिविघातजन्येनानन्देन प्रमोदेन सुन्दरो भाविस्वैश्वर्यपदलाभात्मकसौभाग्यसूचकेन वा हर्षेण स्पृहणीयो यः पुरन्दरो देवेन्द्रस्तेन विजयकालोचिते भगवतीचरणकमलार्चनप्रस्तावे मुक्तानि निक्षिप्तानि माल्यानि दिव्याद्भुतसुरभिविचित्रकुसुमप्रचयोम्भितस्रजो यस्मिन् तत्। अथवा आनन्दः श्रीपुत्रः सुन्दरः कामेश्वरः पुरन्दर इन्द्रस्त्रिपुरारिर्वा तैर्मुक्तमा-

त्यमिति पूजावसरे आबध्यमानपुष्पदामकमित्यर्थः। एतदुक्तं भवति— भगवत्याः शिञ्जानपादप्रहारो यथा तदानीमिन्द्रस्य विजयहेतुरभूत् तथेदानीं मनसि स्मर्यमाणं तद्गतरतिभावादिभिर्विभाव्यमानं मञ्जीरशिञ्जितादिभिरुद्दीपनैरनुभाव्यमानं तदेव पादाम्बुजं स्वान्तश्चर्व्यमाणतामापद्यमानं ममापि लोकोत्तरसान्द्रानन्दचमत्कारातिशयोल्लासाय भूयादित्याशास्ते। अत्र शृङ्गारवीरयोराश्रयैक्यात् स्पष्टाभासमानत्वेन संकरः। चरणविद्यासंप्रदायरहस्यं सुगोपनीयतया गुरुमुखावगम्यतया च नोद्घाटयते। तदवगतौ सत्यामेकवचनत्वेन कथनाभिप्रायो ज्ञायेत। नापि युगलत्वाभिधानप्रसिद्धिविरोधः स्यात् ॥ १ ॥

अथ श्रीदेवीविषयकाणां प्रणतीनामपि तद्विद्यांशोपासनौचित्यनुगुणानि फलानि निर्दिशति—

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य-
सम्पत्तिकल्पतरवस्त्रिपुरे! जयन्ति।
एते कवित्वकुमुदप्रकरावबोध-
पूर्णेन्दवस्त्वयि जगज्जननि! प्रणामाः ॥ २ ॥

हे जगज्जननि! त्रिपुरे! त्रीणि पुराणि शरीरबुद्धिप्राणात्मकानि यस्यास्त्रिपुरा, तथाहि—श्रीचक्रं पुरत्रयरूपं चतुरस्रषोडशदलाष्टदलात्मकं प्रथमं पुरं, चतुर्दशारद्विदशारात्मकं द्वितीयं, अष्टारत्रिकोणबिन्दुचक्रात्मकं तृतीयं पुरमिति रहस्यशास्त्रेषु निर्णीतम्। अर्थान्तराणि तु प्राक्प्रोक्तानि यथास्थानमग्रेऽपि वक्ष्यन्ते। त्वयि त्वद्विषये एते भक्तिमद्भिः प्रह्वीभूतैरस्माभिर्विनिवेदिताः प्रणामा नमस्कृतयो जयन्ति सर्वोत्कर्षफलदानशालिनः सन्ति। कीदृशाः सौन्दर्यस्य सौभाग्यस्य विभ्रमाणां शृङ्गारजन्यमनोवृत्त्यनवस्थादीनां विलासानां च भुव आकरा उत्पत्तिस्थानानि। यदुक्तम्—

'चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः।'

इति । अत्र बहुवचनस्य समासान्तर्गतत्वाल्लब्धेन आदिना विलासलीलादयो हावभावादयोऽपि ग्राह्याः । तत्र मदरागहर्षजनितो विपर्यासो विभ्रमः । यथा—अनिमित्तमासनादुत्थायान्यत्र गमनम्, प्रियारब्धकथामाक्षिप्य सख्या सहालापः, मुधैव रुषितक्रोधौ, पुष्पादीनां याञ्च्या सहसा तत्परित्यागः, वस्त्राभरणमाल्यानामकारणतः खण्डनं मनन च । केचित्तु योषितां यौवनजो विकारो विभ्रम इत्याहुः । तदुक्तम्—

'उपदिशति कामिनीनां यौवनमद एव ललितानि ।'

इति । सर्वत्रात्र शृङ्गाररस एव कारणम् । पुनः कीदृशाः । भुवनानामाधिपत्यं साम्राज्यं तस्य संपत्तेः समृद्धेः कल्पतरवस्तज्जनकाः, तथा कवित्वानां कविकर्मणां अष्टादशलक्षणलक्षितानां रूपकादिदृश्यश्रव्यभेदैर्भेदितानां काव्यानां शृङ्गारादिरससन्दर्भाणां तद्रूपाणां कुमुदानां कुवलयकुसुमानां प्रकराः कदम्बानि तेषामवबोधे ज्ञानविकासे पूर्णेन्दवो राकासुधांशवो वाग्विलासकारिण इति यावत् । एभिस्त्रिभिर्विशेषणैरिदं सूच्यते, यत्कूटत्रयात्मकस्य महात्रिपुरसुन्दर्या महामन्त्रस्योपासनया त्रिविधफललाभस्तत्रादिकूटोपासनायां सरस्वतीप्रसादात्कवित्वशक्तिजननं, द्वितीयकूटोपासनायां तदधिपतिकामराजप्रसादात्सौन्दर्यादिजननं, तृतीयोपासनायां तत्प्रसादात्साम्राज्यलाभः इति ज्ञेयम् । शक्तिकूटसधनादिफलं तु वामकेश्वरे—

'प्रवक्ष्यामि महादेवि ! शक्तिकूटस्य साधनम् ।
शक्तिबीजस्वरूपा तु सृष्ट्वा संहरते यदा ॥
सृष्टिसंहारपर्यन्तं शरीरे परिचिन्तयेत् ।
ततो भवति देवेशि ! वैनतेय इवापरः ॥
नागानां दर्शनाद् देवि ! जडीकरणकारकः ।
देहिनाममृतासारधीरधाराधरोपमः ॥
स्थिरकृत्रिमशंकादिविषोपविषनाशनः ।
दुष्टव्याधिग्रहानोकडाकिनीरूपिकागणैः ॥

भूतप्रेतपिशाचौघैस्त्रिनेत्र इव दृश्यते ।
अथवा येन विद्येयं परिपूर्णा विचिन्त्यते ॥
जन्ममण्डलहृत्पद्ममुखमण्डलमध्यगा ।
केवलैव महेशानि ! पद्मरागसमप्रभा ॥
तस्याष्टगुणमैश्वर्यमचिरात्संप्रवर्तते ।
मनसा संस्मरत्यस्या यदि नामापि साधकः ॥
तदैव मातृचक्रस्यविदितो भवति प्रिये ।
यदैव जपते विद्यां महात्रिपुरसुन्दरीम् ॥
तदैव मातृचक्राज्ञा सेक्रामत्यस्य विग्रहे ।
सर्वासां सर्वसंस्थानां योगिनीनां भवेत्प्रियः ॥
पुत्रवत्परमेशानि ! ध्यानादेव हि साधकः ।
यदा तु परमेशानि ! परिपूर्णां प्रपूजयेत् ॥
प्रयच्छन्ति तदैवास्य खेचरीसिद्धिमुत्तमाम् ।
चतुःषष्टियंताः कोटचो योगिनीनां महौजसाम् ॥
चक्रमेतत्समाश्रित्य संस्थिता वीरवन्दिते ! ।
आदौ सम्बन्धिनि पदे मध्ये बीजाष्टकं बहिः ॥
कलां ध्यात्वाङ्गना रङ्गे जायतेऽनङ्गवत्प्रियः ।
करशुद्धयादिविद्यानामेकैकं परमेश्वरि ॥
रुद्रयामलतन्त्रे तु कर्म प्रोक्तं मया पुरा ।
मादनैर्मदनो भूत्वा पाशांकुशधनुःशरैः ॥
क्षोभयेत्स्वर्गभूर्लोकपातालतलयोषितः ।
तथैव शाक्तैर्देवेशि ! त्रिपुरीकृतविग्रहः ॥
साधयेत्सिद्धगन्धर्वदेवविद्याधरानपि ।
तत्र शाक्ता महावज्रप्रस्तारे जनिताः शराः ॥
मादनास्त्वादिपरतः सर्वाधस्तान्नियोजिताः ।
आद्यन्तगो महापाशः पौरुषेयः प्रकीर्तितः ॥
रुद्रशक्तिः कुण्डलाख्या माया स्त्रीपाश उच्यते ।
तुरीयमरुणावर्गे द्वितीयमपि पार्वति ॥

पुंस्त्रीकोदण्डयुगलं कामाग्निव्यापकोऽङ्कुशः ॥' इति ॥ २ ॥

अधुना स्वात्मनि स्तुतिकर्तृकताभिमानं निरस्यन् स्तोतृषु स्वकलनायां व्रीडामाविष्करोति—

देवि ! स्तुतिव्यतिकरे कृतबुद्धयस्ते
वाचस्पतिप्रभृतयोऽपि जडीभवन्ति ।
तस्मान्निसर्गजडिमा कतमोऽहमत्र
स्तोत्रं तव त्रिपुरतापनपत्नि ! कर्तुम् ॥ ३ ॥

हे त्रिपुरतापनपत्नि ! त्रिपुरो नाम दैत्यस्तस्य तापनो दाहकः शिवस्तस्य पत्नी तदवियुक्तवपुस्तत्सम्बोधनं हे परब्रह्ममहिषि ! देवि ! शिवादिधरण्यन्तजगत्सर्गादिक्रीडातत्परे ! ते तव स्तुतिव्यतिकरे त्वद्गुणवर्णनारूपस्तवनव्यापारे कृतबुद्धयस्तीक्ष्णकुशाग्रधिषणा विद्वांसो वाचस्पतिप्रभृतयो बृहस्पत्यादयोऽपि जडीभवन्ति अजडा अपि सन्तो जडाः संपद्यन्ते मूकीभवन्ति । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (शांडि० २-३) इति श्रुतेः । तेष्वपि त्वद्रूपाया वाचस्त्वदिच्छाया ऋते प्रसराभावादिति यावत्, तत्र मन्दमतीनां मादृशानां किमु वक्तव्यं अपि शब्देन वेदा अप्यसमर्थाः इति । यतस्ते विधिमुखेन प्रतिपादयितुमुद्यताश्च स्थूलारुन्धतीन्यायेन तटस्थलक्षणरीत्यैव सत्रपं निर्दिशन्ति । यदुक्तं शिवस्तवे 'श्रीमदाचार्यभास्कररायपादै' :—

'सर्वज्ञाः श्रुतयोऽपि याः परशिव त्वत्प्राणरूपाः प्रियाः
शृङ्गग्राहिकया त्रपाभृत इव त्वां न प्रजल्पन्ति ताः ।
अन्यानेव तु नेतिनेति बहुशो वाचा निषेधन्ति चेत्
कोऽन्यस्त्वामिदमित्थमित्यनुवदेत्तत्रापि मादृग्जनः ॥'

इति । ग्रन्थकृतापि 'पञ्चमे स्तवे'

'श्रुतीनां मूर्धानः प्रकृतिकठिनाः कोमलतरे ।

कथं ते विन्दन्ते पदकिसलये पार्वति ! पदम् ।।' (श्लो० २४)

इत्युक्तम् तस्माद्धेतोः, अत्र वाचस्पत्यादिकृतबुद्धित्वगणनायां प्रस्तुतायां तव स्तोत्रं लौकिकगुणानुवादः, स च षड्विधः । तदुक्तम्—

'नमस्कारस्तथाशीश्च सिद्धान्तोक्तिः पराक्रमः ।
विभूतिः प्रार्थना चेति षड्विधं स्तोत्रलक्षणम् ।।'

इति । प्रगीतमन्त्रसाध्यकगुणिनिष्ठगुणाभिधानं वैदिकं स्तोत्रं वा कर्तुमहं तेषां वाचस्पत्यादीनां मध्ये कतमो न कोऽपि गणनायार्हः अयमसाविति निर्धारणीयः । यतो निसर्गजडिमा स्वभावत एव जाडचयुक्तो मन्दमतिः वाचस्पत्यादीनामप्यव्यापार्ये वस्तुनि व्यापारचिकीर्षा चाश्चल्यान्मम महती त्रपेत्यर्थः । यदुक्तं 'श्रीललितास्तवरत्ने'—

'कस्तु क्षितौ पटीयान्वस्तु स्तोतुं शिवाङ्कवास्तव्यम् ।
अस्तु चिरन्तनसुकृतैः प्रस्तुतकाम्याय तन्मम पुरस्तात् ।।'

इति ।। ३ ।।

नन्वेवमशक्यस्तोत्रकरणे कथं तव चिकीर्षोद्यम इत्याशङ्क्य भक्तिरसवैवश्यं स्वस्य द्योतयति—

**मातस्तथापि भवतीं भवतीव्रताप-**
**विच्छित्तये स्तुति[1]महार्णवकर्णधारः ।**
**स्तोतुं भवानि ! स भवच्चरणारबिन्द-**
**भक्तिग्रहः किमपि मां मुखरीकरोति ॥ ४ ॥**

हे मातर्विश्वजननि ! भवानि ! भवस्य पत्नि ! तथापि निसर्गतो जडिम्न्यपि भवे संसारे तीव्राणां दुःसहानां तापानां त्रिविधाध्यात्मिकादीनां क्लेशानां विच्छित्तये विच्छेदं कर्तुं भवतीं त्वां स्तोतुं स स्वसं-

1. 'स्तवमहार्णवे'ति पाठान्तरम् ।

वेद्यो भवच्चरणारबिन्दयोस्त्वत्पादाम्बुजयोर्विषये भक्तिरतिशयगाढस्नेहस्तद्रूपो ग्रह आवेशस्त्वत्पादाम्बुजमकरन्दरसनावेशपारवश्यं किमप्यतर्कितमेव मां मुखरीकरोति वाचाटयति हठान्मां स्तोतुं प्रयोजयति। कीदृशः स्तुतिरूपो यो महार्णवो निरवधिगाम्भर्यादिभिर्दुरवगाह्यमानत्वान्महासागरस्तत्र कर्णधारः पारप्रापकत्वात्पोतवाहकः, यथा पोतवाहेनाब्धेः पारे नीयते तद्वन्मां मन्दमतिमपि त्वद्भक्तिरेव स्तुतेः पारं नयेदिति भावः। अथ च वाग् मान्द्यमपि तावदेव सञ्जातायां त्वत्कटाक्षदृष्ट्यां वाक्प्रवाहप्रसरणनिरोधात्। यदुक्तं भट्टनारायणेन—

'त्वय्यनिच्छति कः शम्भो! शक्तः कुब्जयितुं तृणम्।
त्वदिच्छानुग्रहीतस्तु वहेद् ब्राह्मीं धुरं न कः॥' (स्त० चि० ९३)
॥ ४॥

ननु विष्णुविरिञ्च्यादय एव विश्वसर्गादिकारित्वात् स्तुत्याः, नाहमित्याशङ्क्याह—

सूते जगन्ति भवती भवती बिभर्ति
जागर्ति तत्क्षयकृते भवती भवानि।
मोहं भिनत्ति भवती भवती रुणद्धि
लीलायितं जयति चित्रमिदं भवत्याः॥ ५॥

हे भवानि! भवती जगन्ति शिवादिक्षित्यन्तषट्त्रिंशत्तत्त्वात्मकानि सूते सृजति। 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद् ब्रह्मेति' (तैत्ति० ३-१) श्रुतेः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवीति' क्षित्यन्तसर्गश्रुतेः (तैत्ति० २-१-१)। यथा 'सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापि यान्तीति' श्रुतेः। यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'ति च (बृह० २-१-२०)। याज्ञवल्क्यस्मृतिरपि—

'निःसरन्ति यथा लोहपिण्डात्तप्तात् स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥'

इति । सृज्यं त्वन्तस्तादात्म्येनावस्थितमेव अन्यथा तद्विषयपरामर्शानुपपत्तेः यदुक्तम्—

'स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम् ।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते ॥' (ई. प्र. १-५-१०)

इति । 'सदेवसोम्येदमग्र आसीत्' (छां० उ० ६-२-१) 'एकमेवाद्वितीयं ब्रह्म इति' श्रुतेः । (पैङ्गलो० १-१) अग्रेऽपि वक्ष्यते—

'शिवादिक्षित्यन्तं त्रिवलयतनोः सर्वमुदरे तवास्ते' (स.ज.स्त.२९) इति, 'बह्वस्यां प्रजायेये'ति तदात्मानं स्वयमकुरुत' इति श्रुतेरिच्छामात्रेणैव क्रमतारतम्यतो विश्वोत्पादनात् ।

'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति' (प्र. हृ. सू. २ )इति,
'चितिः स्वतन्त्रा विश्वसिद्धिहेतुरि'ति, (प्र.हृ.सू.१)
'स्वेच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपि'

तथा—'जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि' इति, भुवनानि शैवागमप्रक्रियया चतुर्विंशत्युत्तरद्विशतसंख्यकानि, प्रक्रियान्तरतो भूर्भुवःस्वर्लक्षणानि वा चतुर्दश वा भुवनाध्वत्मकानि सूते सृजति, भवत्या ब्राह्मीशक्तिरूपयानाविष्टस्य ब्रह्मणो जगत्सर्जनक्रियायामशक्तत्वात् शक्तिविहीनस्य पाषाणादिजडप्रायत्वात्स्पन्दाभावे तत्र परमुखप्रेक्षित्वात्पारतन्त्र्यं सुस्पष्टमतो वस्तुतो जगत्सर्जनादिकं भवत्येव तत्तच्छक्तिस्वरूपा विधत्ते इत्यर्थः । भवत्येव तानि सृष्टानि बिभर्ति धारयति पोषयति च, अर्थाद्वैष्णवीशक्तिर्भूत्वा तत्कार्यं कुरुते । प्राग्वद्विष्णोरपि तच्छक्त्यावेशं विना स्वकार्यसम्पादनासामर्थ्यात् । अत्र भवतीति पदस्यासकृदाम्रेडनेनावधारणार्थोऽबधार्यंस्तेन भवत्येव नान्या इत्यर्थः । एवमग्रतोऽपि बोद्धव्यम् । तथा तेषां सृष्टधृतपुष्टानां जगतां

क्षयकृते यथाकालं यथास्वं च संहर्तुं बीजात्मना स्वस्मिन्नवस्थातुं न तु सर्वथा विलयं सम्पादयितुं भवत्येव जागर्ति जागरूकास्ति, न तु कादाचित्कीं प्रमादावस्थां तत्र समाश्रयते। अत्रापि पूर्ववद्रौद्रीशक्तिरूपा संपद्य संहृत्याधिष्ठातृ रुद्रस्य कार्यं करोतीति ज्ञेयम्। एवं भवत्येव मोहमपूर्णम्मन्यतात्मकमाणवमलमुद्भविष्यन्मलद्वयाधारभूतं भिनत्ति विदारयति। यद्वा मोहशब्देन तमोमोहप्रभृतयो विपर्यया शक्तितुष्टिसिद्धयाख्याः पञ्चाशत् प्रत्यया उपलक्ष्यन्ते यदुक्तं 'विष्णुपुराणे'—

'तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः॥'

इति। ज्येष्टाख्या शक्तिः संभूय स्वकिरणचयविस्फारणेन परशक्तिपातविद्धानणून्मोहाब्धिनिम्मग्नान् उद्धरन्ती सदाशिवाख्यपञ्चमकारणकार्यं कल्पयतीत्यर्थः। तथैव भवती रुणद्धि परशक्त्यनाघ्रातत्वान्मायान्धाञ्जन्तूंस्तिरोदधाति स्वस्वरूपावरणं करोति। अत्रेश्वराख्यकारणपदे ऐश्वर्याख्यशक्त्या पूर्ववत्तत्कार्यसम्पादनात्। एतेन चतुर्थं कृत्यमभिहितं ज्ञेयम्। तदुक्तं 'भागवते'—

'शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम्।
इच्छया संहरत्येषा जगदेतच्चराचरम्॥
न विष्णुर्न हरो नेन्द्रो न ब्रह्मा न च पावकः।
नार्को न वरुणः शक्ताः स्वे स्वे कार्ये कथञ्चन॥
तया युक्ता हि कुर्वन्ति स्वानि कार्याणि ते सुराः।
कारणं सर्वकार्येषु प्रत्यक्षेणावगम्यते॥'

इत्यनेन सर्जनादिकर्तृत्वं प्रत्यक्षादिभिः प्रमाणैः शक्तेरेव प्रसिद्धमित्युक्तं भवति। अन्यत्रापि—

'शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः।
शक्तिहीनोऽपि यः कश्चिदसमर्थः स्मृतो बुधैः॥'

इति। इतीदं पञ्चकृत्यात्मकं कार्यं चित्रमाश्चर्यं विचित्रं च, भवत्यास्तव लीलायितं, लीला अन्यप्रयोजननिमित्तको व्यापारः, स्वप्रमोदातिशयहेतुको वा तदाचरणं खेलायितं, लीलया चेष्टितमनायासेन कृतमित्यर्थः। तदुक्तं भास्कररायेण स्वकृतदेवीस्तवे—

'विधिविष्णुमुखामरोदयस्थितिनाशेषु शिवोऽप्यनीश्वरः।
जगदम्ब ! तव त्वयं क्रमः क्षणमुद्दालकपुष्पभञ्जिका॥'

उद्दालकेति क्रीडाविशेषस्य नामधेयम्। जयति आह्लादरसातिरेकात्सातिशयेन वर्तते। 'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयती'त्युक्तस्थित्या निर्भरानन्दरसप्रवाहघनोच्छलितमेतदिति भावः। अत्रायमाशयः— अग्नीषोममयी पराशक्तिः स्वरूपगोपनात्मिकायां लीलायामपि स्वप्रत्यभिज्ञालक्षणं कृत्यपञ्चकमनुशीलयन्ती तेन चिदानन्दघनं स्वात्मानमवभासयेदिति। तदुक्तम्—

'नमः शिवाय सततं पञ्चकृत्यविधायिने।
चिदानन्दघनस्वात्मपरमार्थावभासिने॥' (प्र० हृ० श्लो० ९)

इति, 'प्रत्यभिज्ञाहृदये' 'तथापि तद्वत्पञ्चकृत्यानि करोति' (सू० १०)। तेषां लक्षणानि च तत्रैव 'आभासनरक्तिविमर्शनबीजावस्थापनतस्तानीति' (सू० ११)॥ ५॥

एवं तावत् भगवतीप्रसादपात्रीभूतादपि अन्ये तदाशंसव इति वचोभङ्ग्या तन्महिमाद्भुतत्वं ध्वनयन्नाह—

यस्मिन्मनागपि नवाम्बुजपत्रगौरि !
गौरि ! प्रसादमधुरां दृशमादधासि।
तस्मिन्निरन्तरमनङ्गशरावकीर्ण-
सीमन्तिनीनयनसंततयः पतन्ति॥ ६॥

हे नवाम्बुजपत्रगौरि ! नवं नूतनं सद्यः प्रफुल्लं यदम्बुजं कमलं तस्य

यानि पत्राणि स्निग्धारुणवर्णानि दलानि तद्वद्गौरो बर्णो यस्यास्त-त्सम्बोधनं, अत एवानुगुणामन्त्रणं हे गौरि ! कात्यायनि ! इति । तदुक्तं 'देवी पुराणे'—

'योगाग्निना तु या दग्धा पुनर्जाता हिमालयात् ।
शंखकुन्देन्दुवर्णा च तस्माद्गौरीति सा स्मृता ।।'

इतीयं कान्यकुब्जपीठाधिष्ठात्री गौरी वा । तदुक्तं 'पाद्मे'—

'कान्यकुब्जे तथा गौरी' इति ।

अथवा ब्रह्माज्ञया यदा देवी स्वात्मानं शुक्लकृष्णवर्णत्वेनाभासितवती तदा गौरीत्यादिनाम्ना प्रसिद्धाभूत् । तदुक्तं 'वायुपुराणे'—

'तत्र या सा महाभागा शंकरस्यार्धकायिनी ।
कायार्धं दक्षिणं तस्याः शुक्लं वामं तथा सितम् ।।
आत्मानं विभजस्वेति प्रोक्ता देवी स्वयम्भुवा ।
तदैव द्विविधा भूत्वा गौरी कालीति सा द्विजाः ।।

इति । यस्मिन्ननुग्राह्ये दासजने प्रसादेनगुणेनानुग्रहेण च मधुरां माधुर्योपेतां मनोज्ञां हृद्यां चेत्यर्थः । मनाक् अपि दृशमनुकम्पारसार्द्र-कटाक्षमादधासि निहितवती असि । समीप्ये वर्तमानवत्प्रयोगः । तस्मिं-स्त्वद् अपाङ्गदृक्सम्पातभाजने जनेऽनङ्गस्य स्मरस्य शरैरशोकादि-कुसुममयैः पञ्चसंख्यैर्बाणैरवकीर्णा आविद्धा याः सीमन्तिन्यः कामज्व-रार्ताः कामिन्यस्तासां नयनसन्ततयो लोचनपङ्क्तयो निरन्तरमविरतं यथा तथा पतन्ति, अनङ्गज्वरशान्त्यर्थं तास्तं प्रति सरसं दृशो निबध्नन्ति इत्यर्थः । अत्र दृक्पातकार्ये कारणत्वेन त्वय्येकस्यां स्थितायां सत्यामन्यासामपि 'खले कपोतिकान्यायेन' दृक्पाताः स्युरिति संदर्भवि-च्छित्या समुच्चयोऽलङ्कारः । अत्रानङ्गपदेन स्मरस्य केनापि प्रतिद्व-न्द्विनाऽप्रतियोगित्वमशरीरत्वात् । अत एव तासामबलानामुपायान्तरा-भावात्तद्दुःखशान्तये साक्षाद्दुःखापनोदनाम्बाप्रसाददृग्लाभाभावात्त-

दनुगृहीतजनदर्शनमात्रावलम्बः स्पृहणीय इति ज्ञेयम्। अथ च द्वितीयवीजोपासनाफलमपि सर्ववशीकार इति ॥ ६ ॥

अधुना प्रख्यातसम्राण्निदर्शनरीत्या भक्तिमतः प्रोत्साहयन् पादारबिन्दरजोमाहात्म्यमावेदयति—

पृथ्वीभुजोऽप्युदयनप्रवरस्य तस्य
विद्याधरप्रणतिचुम्बितपादपीठः।
यश्चक्रवर्तिपदवीप्रणयः स एष
त्वत्पादपङ्कजरजःकणजः प्रसादः ॥ ७ ॥

हे देवि इत्यध्याहृत्य प्राग्वत्सम्बोधनार्थो ज्ञेयः, अथवा देवीद्योतनादिस्वभावा दिव् धातोः, क्रीडाविजिगीषाद्यनेकार्थानुगमात्। स एष प्रसिद्धतया सर्वानुभूतत्वाच्च त्वत्पादपङ्कजयोस्तव चरणकमलयो रजसां परागाणां कणः। सूक्ष्मोंऽशस्तज्जस्तज्जन्यः प्रसादोऽनुग्रहः। स कस्तस्य प्रसिद्धातिक्रान्ततया भवत्प्रसादपात्रीभूतस्योदयनप्रवरस्य नरवाहनदत्तस्य वृहत्कथायास्तत्कथामूलत्वात्। पृथ्वीभुजोऽपि महीमात्रभुजोऽपि राज्ञो यश्चक्रवर्तिपदव्याः सार्वभौमपदस्य प्रणयः प्राप्तिः सम्पद्यतेति शेषः। कीदृशः विद्याधरेति—

'पादुकाखड्गवेतालसिद्धद्रव्यमनःशिलाः।
अञ्जनं विवरं चैव चेटकं यक्षिणीं तथा।
यत्किञ्चित्सिद्धिनिचयं विद्यते भुवनत्रये।'

इति, वामकेश्वरोक्तनीत्यासिद्धिविद्यानां धारका विद्याधराः। यद्वा—विद्या शिक्षाकल्पादयोऽष्टादश तासां पठनपाठनादिप्रचयगमनतदर्थानुष्ठानादिना धरा धारका विद्याधरा विद्वांसः यदुक्तं वायवीयपुराणे—

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्याः ह्येताश्चतुर्दश ॥

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् ।
अर्थशास्त्रं परं तस्माद्विद्यास्त्वष्टादश स्मृताः ॥'

इति । ये त्वत्र विद्याधरा देवविशेषा इत्याहुस्तन्निर्मूलम् । प्रकृते विद्याधरदेवजातीराज्यलाभाप्रसिद्धेः । तेषां प्रणतिभिः प्रणामैश्चुम्बितं स्पृष्टं पादपीठं पादाधःस्थितमासनं यस्य स साम्राज्यं प्राप्य पादपीठेषु तैर्निरन्तरं प्रणतः इत्यर्थः । एवमेतादृशोऽनुग्रहविपाकस्त्वच्चरणरजःसंपर्के, किमु त्वत्कृपाकटाक्षपाते...इति भावः । अयमत्राशयः—उदयनप्रवरः सामान्यकुलोत्पन्नः नृपः कश्चिन्महादेव्यनुग्रहाच्चक्रवर्तित्वमवाप्य महाभोगैश्वर्यसम्पदं भेजे इति । अपि शब्द आश्चर्यद्योतको । अत्रापि कामराजोपासनायाः फलकथनमूह्यम् । कामराजसाधनादिफलं तु वामकेश्वरे—

'ततस्तु शृणु देवेशि ! कामराजस्य साधनम् ।
तथा कामकलारूपा मदनाङ्कुरगोचरे ॥
उद्यदादित्यबिम्बाभा समुज्ज्वलवपुः प्रिये ।
स्फुरद्दीपशिखाकारा बिन्दुधाराप्रवर्षिणी ॥
समस्तभुवनाभोगकवलीकृतजीविता ।
महास्वमहिमाक्रान्तिस्वस्थाहङ्कृतिभूमिका ॥
क्रमेण तु ततोऽनङ्गपर्यन्तं प्रोल्लसन्त्यपि ।
शरीरानङ्गपर्यन्तमेकैवमुभयात्मिका ॥
ततो भवति देवेशि ! सर्वशृङ्गारमानिनाम् ।
रागिणां साधको देवि ! बाधको मदनाधिकः ॥
तद्दृष्टिपथगा नारी सुरी वाप्यथ वासुरी ।
विद्याधरी किन्नरी वा यक्षी नागाङ्गनाऽथवा ॥
प्रचण्डतरभूपालकन्यका सिद्धकन्यका ।
ज्वलन्मदनदुष्प्रेक्ष्यदहनोत्तप्तमानसा ॥
क्लिन्ना प्रचलितापाङ्गा विमूढा मदविह्वला ।
निवेदितात्मसर्वस्वा वशगा देवि ! जायते ॥

चलज्जलेन्दुसदृशी बालार्ककिरणारुणा ।
चिन्तिता योषितां योनौ संभक्षोयति तत्क्षणात् ॥
सैव सिन्दूरवर्णाभा हृदये चिन्तिता सती ।
संमोहोन्मादनाविष्टचित्ताकर्षकरी स्मृता ॥
नियोजिताथवा मूर्ध्नि वर्षन्ती रक्तबिन्दुभिः ।
धारणसंप्रयोगेन करोति वशगं जगत् ॥
अथान्यं शृणु वक्ष्यामि प्रयोगं भुवि दुर्लभम् ।
येन विज्ञातमात्रेण साधको मदनायते ॥
कामस्थं काममध्यस्थं कामोदरपुटीकृतम् ।
कामेन कामयेत्कामं कामं कामेषु निक्षिपेत् ॥
कामेन कामितं कृत्वा कामस्थं क्षोभयेद्ध्रुवम् ।'

इति ॥ ७ ॥

एवं कवीनामपि निरर्गलसारस्वतसूक्तिलाभद्वारा कीर्तिरपि चिरस्थायिनी त्वत्पादप्रसादजं फलमित्याह—

त्वत्पादपङ्कजरजःप्रणिपातपूतैः[1]
पुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः ।
क्षीरक्षपाकरदुकूलहिमावदाता
कैरप्यवापि भुवनत्रितयेऽपि कीर्तिः ॥ ८ ॥

हे देवि ! त्वत्पादपङ्कजयोस्तव चरणकमलयो रजोभिः परागपुञ्जैः प्रणिपातेषु प्रणतिषु मूर्धसंपर्कात्पूतैः पवित्रितदेहैरत एव पुण्यैः पुण्यकृद्भिस्त्वत्पादार्चनरूपशुभकर्मकारित्वादित्यर्थः । अनल्पा अमन्दा मतयो बुद्धयो येषां तैः कृतिभिः कृतप्रज्ञैर्विद्वद्भिरतः कवयः काव्यादिरचनाकौशलवन्तस्तेषामिन्द्रैः प्राप्तमहाकविपदवीकैः कैरपि विरलत्वात्कतिपयैः श्रीहर्षमाघबाणभट्टकालिदासादिप्रभृतिभिर्भुवनत्रयेऽपि

1. 'पूर्वै'रिति पाठान्तरम् ।

त्रैलोक्यामपि क्षीरं पयः क्षपाकरः सुधांशुर्दुकूलश्रीनांशुकं हिमं तुषारस्तद्वदवदाता शुक्लवर्णा कीर्तिर्यशोऽवापि प्राप्ता। अत्र समुदितानां बहुशुक्लवस्तूनां संभूय शौक्ल्यगुणातिशयपरिणामादिति बहूपमानाश्रयेण निरुपमशौक्लचगुणाधिक्यं तत्कीर्तौ ध्वन्यते। अर्थात् ते कवयो महादेवीप्रसादाधिगतसारस्वतसुधाब्धिसारप्रसरन्निरर्गलवाङमाधुर्यप्रवाहतया प्रसादमाधुर्यादिगुणानुगुणितानि सालङ्कृतीनि शृङ्गारादिरसजीवितानि काव्यानि निबध्य दिवं गता अपि कीर्तिशरीरैश्चिरं स्थायिभिरद्यापि भूमौ जीवन्तीवेति। अनेन वाग्भवोपासनाफलकीर्तनं सूच्यते इति ॥ ८ ॥

न केवलं मनुष्याणामेव भोगैश्वर्यसंप्राप्त्यर्थं देव्याराधनापेक्षमाणत्वं यावत्समृद्धानां देवानामपि तद्योगक्षेमोद्वहनायेति सूचयन् देवीप्रीत्यतिशयापादनाय लोकाप्रसिद्धमुपचारोपकरणमाह—

कल्पद्रुमप्रसवकल्पितचित्रपूजा-
मुद्दीपितप्रियतमामदरक्तगीति[1]।
नित्यं भवानि! भवतीमुपवीणयन्ति
विद्याधराः कनकशैलगुहागृहेषु ॥ ९ ॥

हे भवानि! भवं महादेवं संसारं कामं वा आनयति जीवयति प्रकाशजीवितप्रायत्वादतिदुर्घटकारिस्वातन्त्र्यात्मकत्वात् विलाससारसौन्दर्याकारत्वाद्वा भवानी तस्याः सम्बुद्धिः, कनकशैलस्य हेमाद्रेर्गुहागृहेषु दरीप्रासादेषु नित्यमनवरतं विद्याधरा देवजातयः विद्याया गुटिकाञ्जनखड्गपादुकादिविषयिण्या धरा धारकास्त्वत्प्रसादाभिलाषित्वात् भवतीं त्वामुपवीणयन्ति वीणाभिः समीपे काललयादिसमुचितपञ्चमग्रामादिना गायन्ति सङ्गीतेन प्रीणयन्तीत्यर्थः। क्वणद्वीणाकलरवसाहित्ये

1. गीतिमिति पाठान्तरम्

हि गीतेऽत्यर्थमलौकिकानन्दरसापूरनिमग्नचित्ततया श्रोतुः प्रीत्यतिशयः संजायते इत्यतो वीणोपकरणस्य तैराश्रयणीयत्वात्तत्रापि निसर्गमधुरस्वराणां कामिनीनामस्फुटाक्षरकलकाकलीसमुद्दीपितसङ्गीते किमु वक्तव्यम् ! कीदृशीं भवतीं कल्पद्रुमाणां पारिजातसन्तानादिवृक्षाणां प्रसवैः स्फुरत्सौरभकुसुमैः कल्पिता कृता चित्रपूजा यस्यास्तां, विचित्रवर्णकुसुमप्रकरैः क्रियमाणा पूजा चित्रपूजेत्युच्यते । अथवा चित्रशब्देन नानाविधोपचारा लक्ष्यन्ते, तेन पञ्चोपचारा षोडशोपचारा वा पूजेत्यर्थान्तरम् । एतेन पूजानन्तरं संगीतादेरवकाश इत्यभिहितम् । कथमुपवीणयन्तीत्याह-उद्दीपिता औज्ज्वल्यं नीताः प्रियतमानां प्रेयसीनां विद्याधरीणां मदेन दिव्यसुधापानजन्येनानन्दोल्लासेन रक्ता मधुरकण्ठरागयुक्ता गीतयः संगीतार्थप्रबन्धरचनाविशेषा यत्र तत् इति क्रियाविशेषणम् । रागास्तु–वसन्त-गूर्जर–कर्णाट–गौडाद्यभिधानाः षड्जमध्यमादिसप्तस्वरानुबन्धिनः सङ्गीतशास्त्रेषु प्रसिद्धाः । वीणेत्युपलक्षणं तेन मृदङ्गवंशादीन्यपि वाद्यानि गृह्यन्ते । अयं भावः–चित्रपूजावसाने रक्तकण्ठीभिर्विद्याधरीभिस्तरुणानन्दोल्लासोपेतकलमधुरस्वरं संगायन्तीभिः सह तौर्यत्रिककलाकौशल्येन विद्याधरा वीणावंशघनमृदङ्गादिवादनैस्त्वां हर्म्येषु समाराधयन्तीति तन्माहात्म्यात्तेषामधिकभोगैश्वर्यसंपत्तय इति ॥ ९ ॥

अथ भगवतीचरणप्रसादस्य फलानि प्रस्तौति—

लक्ष्मीवशीकरणकर्मणि कामिनीना-
माकर्षणव्यतिकरेषु च सिद्धमन्त्रः ।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो
देवि ! त्वदङ्घ्रिजनितो जयति प्रसादः ॥ १० ॥

हे देवि ! लक्ष्म्या धनभूहस्त्यश्वगवादिसंपदः पद्मायां वा वशीकरणकर्मणि यावज्जीवविधेयतारूपवशीकरणक्रियायां तथा कामिनीनां दूरस्थितानामप्यङ्गनानामाकर्षणव्यतिकरेषु चाकृष्टिव्यापारेष्वपि सि-

द्धमन्त्रः सिद्धः पूर्वसेवारूपया पञ्चाङ्गपुरश्चर्यया तत्तन्मन्त्रार्णगुणितलक्षसंख्यजपादिपुरःसरं साधितो यथेप्सितकाम्यकर्मप्रयोगार्हीकृतो मन्त्रो मननत्राणात्मको विद्यादिरूपः। सिद्धमन्त्रस्यैव प्रयोगार्हत्वादविलम्बेन फलसंपत्तेरिति भावः। तथा च 'वामकेश्वरे'—

'तदाशाभिमुखो भूत्वा त्रिपुरीकृतविग्रहः।
बद्ध्वा तु क्षोभिणीमुद्रां विद्यामष्टशतं जपेत्॥ इत्यादि।
भ्रमन्तीमानयेन्नारीं योजनानां शतैरपि।' इत्यन्तम्।

ननु किमिदमाकर्षणं साधकस्य स्वीयायाः परकीयायाः वा स्त्रियः, आद्ये नैरन्तर्येण स्वसमीपस्थायाः स्वाधीनत्वाद् दुःसाध्यत्वाभावादाकर्षणवैयर्थ्याच्च। न च कौतुकप्रयोजना प्रवृत्तिरस्तु इति वाच्यं, दुष्प्रापामन्तःपुरस्थां परकीयां प्रत्येव कुतुकप्रदर्शनात्। द्वितीये त्वधर्मस्य विधिविहितत्वाभावादनुपपत्तेः। अतः स्वकीयायाः एवानिच्छन्त्या बलात्कारेणाहरणादिना निमित्तेन दुःसाधतायां विधिवाक्यानां सामर्थ्यं स्यात्। अस्ति च पीठमाहात्म्येषु इतिहासः—

नारायणाख्यस्य मुनेर्भार्यां चन्द्रवदनाख्यां शक्रात्मजेन सेतुराजेनापहृतां मुनिर्देवीमाराध्यैवाजहारेति। अथवा परकीयाकर्षणस्य धर्माविरोधेनैव फलान्तरं कल्प्यम्। अस्तु वा सम्भोगार्थमेवाकर्षणं तथापि भावनाभाव्यत्वेनैवान्वयान्न विधेयत्वम्। तदुक्तं 'तन्त्रवार्तिके'—

फलाङ्गभावनायाश्च प्रत्ययोऽतिविधायकः।
वक्ष्यते जैमिनिश्चात्र तस्य लिप्सार्थलक्षणे॥

इति विहितत्वाभावाच्च न परकीयाभिलाषस्याधर्मत्वं तत्करणभूते प्रकृतप्रयोगे तु श्येनयाग इव धर्मत्वम्। यानि तु सर्वासामेव योषाणां कौलिकः पति'रित्यादीनि श्यामारहस्यकारैर्लिखितानि, तदर्थनिष्कर्षरीत्या तु धर्मत्वं गुरुमुखादेवावगन्तव्यमिति श्रीभास्कररायपादाः। तथा नीरन्ध्रं निविडं यन्मोहरूपमविवेकात्मकं तिमिरं तमस्तस्यच्छिदुरश्छेदको विदारणः प्रदीपः प्रकृष्टोऽज्ञानहारित्वात्प्रकाशको

दीपः, यथा दीपस्तमोऽपहरति तद्वदयं त्वदीयः प्रसादः संसाराब्धिनिमज्जनहेत्वज्ञानसंहरणकृदित्यर्थः । अथवा प्रकर्षेण व्योम्नि दीप्यते दीपयति वा विश्वपदार्थानिति प्रदीपोऽर्को मोहध्वान्तहारीत्येवं भूतस्त्वदंघ्रिजनितस्तवाङ्घ्रिभ्यां पादाम्बुजाभ्यां जनितः प्रसादोऽनुग्रहो जयत्युत्तरोत्तरं सातिशयसत्फलवितरणकुशलो वर्तते । यदुक्तम्—

'असौभाग्यं धत्ते परमसुखबोधास्पदमयं
विचित्रं तद्गेहं भवति पृथुकार्तस्वरभृतम् ।
निविष्टः पर्यङ्के सकलयति कान्तारतरणं
प्रसादं कोपं वा जननि ! भवती यत्र कुरुते ॥'

इत्यत्र प्रसादपक्षेऽसाविति च्छेदः । कार्तस्वरं स्वबर्णम् पल्यङ्को मञ्चः, कान्तारस्य तरणम् । कोपपक्षे तु–असौभाग्यमित्येकं पदम् । अयमिति छेदः, विचित्रं विगतचित्रं पृथुकानामार्तस्वरः । पल्या अङ्के कान्ताया रते रणमितिश्लेषेणयोज्यम् । इत्थं प्राप्तत्वत्पादानुग्रहशालिनां भोगमोक्षौ निरर्गलं सुलभावित्यनेनाभिधीयते । एतादृशप्रकारः श्रीसुन्दरीपादारबिन्दार्चनपराणां विरलानां केषांचिदेव भवति धन्यानां । यदुक्तम्—

'यत्रास्ति भोगो न च तत्र मोक्षो
यत्रास्ति मोक्षो न च तत्र भोगः ।
श्रीसुन्दरीपूजनतत्पराणां
भुक्तिश्च मुक्तिश्च करस्थितैव ॥'

इत्यत्र श्रीविद्याकूटोपासनाफलवैशिष्ट्यं मुख्यतयाभिधातुमभिप्रेततमित्यूह्यम् ॥ १० ॥

सुरस्त्रियोपि त्वच्चरणप्रसादमाशंसमाना इत्याशयेनाह—

देवि त्वदङ्घ्रिनखरत्नभुवो मयूखाः
प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति ।

सेवानतिव्यतिकरे सुरसुन्दरीणां
सीमन्तसीम्नि कुसुमस्तबकायितं यैः ॥ ११ ॥

हे देवि ! त्वदङ्घ्रिनखास्तव पादयोः नखाः एव रत्नानि भुवो भूमय उत्पत्तिस्थानानि येषां ते, रत्नेभ्यो भवन्त्युत्पद्यन्ते इति वा, मयूखाः पन्नखरक्तकिरणाः प्रत्यग्राणामभिनवानां मौक्तिकानां मुक्तामणीनामिव रुग् गौरवर्णा कान्तिर्येषां ते, अत एव पादाब्जदिदृक्षेच्छावतां भक्तानां हृदि मुदमानन्दोत्कर्षमुद्वहन्ति समुल्लासयन्ति । यैः सेवायां शुश्रूषाकाले नतिव्यतिकरे पादाभिवन्दनव्यापृतौ सुरसुन्दरीणाममरललनानां ये सीमन्ताः केशविन्यासास्तेषां सीम्नि प्रान्तदेशे कुसुमस्तबकायितं पुष्पमञ्जरीगुच्छायितं पुष्पस्तबकमिवाचरितमित्यर्थः । केशकलापेषु कुसुमानि धार्यन्ते इति हि सुभगाङ्गनानामाचारः । अमरीकवरीणां श्यामवर्णत्वात्तत्र नखमयूखानां शुक्लत्वात्कुसुमस्तबकरूपेण परिणामः इति यावत् । विकासोन्मुखाः कलिकाः स्तबकाः ।। ११ ।।

अथ स्थानविशेषतस्त्रिधा परिणतं शक्तितेजः प्रत्यक्षव्यापारेणावधारयन् स्वात्मनस्तत्प्रत्यभिज्ञम्मन्यतां द्योतयति—

मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तिदीप्तं
मध्ये ललाटममरायुधरश्मिचित्रम् ।
हृच्चक्रचुम्बि हुतभुक्कणिकानुरूपं
ज्योतिर्यदेतदिदमम्ब ! तव स्वरूपम् ॥ १२ ॥

हे अम्ब ! इदं ज्योतिः–

'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ।'

इति, वृहदारण्यकश्रुतेः (बृह० ४-४-१६) । 'परं शाक्तं तेजः, न तत्र सूर्यो भातीति' (कठो० ५-१५) न तद्भासयते सूर्यः (भ०गी० १५-६) इति श्रुतिस्मृतिप्रसिद्धं, येन सूर्यस्तपति तेजसेद्धः' इति । 'परं

ज्योतिरुपसंपद्य' इति (छां० उ० ८-३-४), 'मनोज्योतिर्जुषता' मित्यादिश्रुतिप्रयोगात्प्रकाशस्वभावस्यास्य परत्वमुच्यते। तव स्वं रूपमसाधारणं रूपम् स्वसंवेद्यमिदं किमित्याह—यदेतन्मूर्ध्नि शिरसि अर्थादाज्ञाचक्राद्यावद् ब्रह्मबिलं स्फुरन्ती विकसन्ती या तुहिनदीधितेर्हिमांशोः दीप्तिश्चन्द्रिका तद्वद्दीप्तं रम्यं, हृदयाह्लादतापप्रशमननेत्रानन्दकारित्वात् तथा मध्येललाटं ललाटेऽर्थादनाहतपदाद्यावदाज्ञाचक्रस्थानममरायुधस्येन्द्रधनुषो रश्मयः किरणास्तद्वच्चित्रं नानावर्णम्। तथा हृच्चक्रचुम्बि अर्थादाधारादाहृदयं हृच्चक्रस्पर्शि हुतभुजोऽग्नेः कणिका अत्यल्पाग्निकणास्तद्वदनुरूपं तत्सङ्काशम्। अनुकारीति पाठेऽपि सदृशमित्यर्थः। भातीति शेषः। अयमाशयः—मूलाधारस्थस्फुरत्तारकाकारज्योतीरूपमेवोपासकानां स्थानत्रितये तथा तथा वैचित्र्येण भासमानं परिशीलनीयमिति। यदुक्तम्—

'योनौ कनकपुञ्जाभं हृदि विद्युच्छटोपमम्।
आज्ञायां चन्द्रसंकाशं महस्तव महेश्वरि॥'

इति। एतेन त्रयाणां बालाविद्याबीजानामपि स्थानवर्णध्यानानि सूचितानि। एतत् प्रथमस्तवे प्रथमश्लोके वितत्य दर्शितम्॥ १२॥
इदानीं कामेश्वर्या ध्यानविशेषं वशीकारानुगुणं प्रस्तौति—

सिन्दूरपांसुपटलच्छुरितामिव द्यां
त्वत्तेजसा जतुरसस्नपितामिवोर्वीम्।
यः पश्यति क्षणमपि त्रिपुरे! विहाय
व्रीडां मृडानि सुदृशस्तमनुद्रवन्ति॥ १३॥

हे त्रिपुरे! त्रिभ्यः पुराभूतत्वादित्यादि त्रिपुरापदनिर्वचनं बोध्यम्। अथ च त्रयाणां मातृमानमेयानां पुरं नगरं तदात्मिका श्रीललिताम्बा, तिसृभ्यो मूर्तिभ्यः पुराभूतत्वात् त्रिपुरेति। तदुक्तम्—

मूर्तित्रयस्यापि पुरातनत्वात्तदम्बिकायास्त्रिपुरेति नाम इति। यदा-

हुर्गौडपादाः—'तत्त्वत्रयेणाभिद्यतेति' एकमेव ब्रह्म तत्त्वत्रयेणाभिद्यतेत्यर्थः। तत्त्वपदं गुणमूर्तिबीजजगत्पीठखण्डादिपुरात्वेन बहुधा व्याख्यातमिति गुणादिभ्यः पुरेत्यर्थः। कालिकापुराणे तु—'त्रिकोणमण्डलं चास्या' इत्यादि प्रस्तुत्य 'सर्वं त्रयं त्रयं यस्मात्तस्मात्तत्त्रिपुरा मता' इति। आचार्यपादैरपि-'देवानां त्रितयं त्रयी हुतभुजामि' इत्यादि श्लोके स्वयमपि तथैवोक्तम्। त्वत्तेजसा त्वच्छरीरोत्थारुणकान्त्या द्यां व्योम सिन्दूरपांसूनां सिन्दूररजसां पटलैः पुञ्जैश्छुरितां खचितां रञ्जितामिव, तथोर्वीं पृथिवीं जतुरसेन लाक्षाद्रवेण स्नपितामाप्लुतामिव यः ध्यानसमये क्षणमपि पश्यति ध्यायतीत्यर्थः। तं त्वद्भावनाभावितमनस्कं भक्तिमन्तं ध्यायिनं व्रीडां लज्जां परापवादमर्यादोल्लंघनादिजां विहाय, हे मृडानि! सुदृशो मृगाक्ष्योऽनुद्रवन्ति अनुधावन्तीत्यर्थः। यदुक्तं सौन्दर्यलहर्याम्—

'तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभिः' इत्यादि। अत्र 'त्वत्तेजसे'त्यनेन लौहित्यं ध्वन्यते। लौहित्यं च विमर्शस्तदुक्तं 'कादिमते'—

'स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा।
लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावना॥'

इति। 'वामकेश्वरेऽपि'—

'स्वयं हि त्रिपुरा देवी लौहित्यं तद्विमर्शनम्।'

इति। उक्तप्रकाशविमर्शसामरस्यात्मिकायाः श्रीमहात्रिपुरसुन्दर्याः स्थूलसूक्ष्मपरत्वेन ध्यानस्य त्रैरूप्यम्। तत्र शीर्षपाणिचरणादिविशिष्टं स्थूलं, मन्त्रमयं सूक्ष्मं, परं तु वासनामयं संविन्मयं वेति। तदुक्तं 'योगवासिष्टे'—

'सामान्यं परमं चेति द्वे रूपे विद्धि मेऽनघ।
पाण्यादियुक्तं सामान्यं यत्तु मूढा उपासते॥
परं रूपमनाद्यन्तं यन्ममैकमनामयम्।
ब्रह्मात्मपरमात्मादिशब्देनैतदुदीर्यते॥ इति।

सामान्यं द्विविधं प्रोक्तं स्थूलसूक्ष्मविभेदतः।'

इति, ज्ञानार्णवे'ऽपि काम्यप्रयोगचर्चायां—

'तदीयकान्तिसिन्दूरभरितं भुवनत्रयम्।
चिन्तयेत्परमेशानि ! त्रैलोक्यं मोहयेत्क्षणात्॥
राजानो वशमायान्ति पन्नगा राक्षसाः सुराः।
कन्दर्प इव देवेशि ! योषितां मानहारकः॥
मनसा चिन्तयेद्योषिद् दासीव वशगा भवेत्।'

इति। एवं कामेश्वरीध्यानेन ध्यायिनः कामराजकूटोपासनाफलं सूच्यते। तदनुसरणपराणां कुलाचारभाजां सुदृशां मर्यादातिक्रमणेऽपि कुलदीक्षाप्रभावान्निर्बन्धनतयेहामुत्रापि सुखप्राप्तिरित्यतो मृडानीति सम्बोधनं साभिप्रायम्॥ १३॥

अथ प्रकारान्तरेण सफलं ध्यानं प्रपञ्चयति—

मातर्मुहूर्तमपि यः स्मरति स्वरूपं
लाक्षारसप्रसरतन्तुनिभं भवत्याः।
ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः
प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः॥ १४॥

हे मातरम्ब ! लाक्षारसाज्जतुद्रवात्प्रसरो उद्भवो यस्य तादृशस्तन्तुः अलक्तकसूत्रं तन्निभं तदुपमं यो भवत्यास्तव स्वरूपं मुहूर्तमपि घटिकाद्वयमपि स्मरति ध्यायति। अनङ्गतप्ताः कामज्वरपीडिता अनन्यमनसोऽनन्यवृत्तयस्तरुण्यः कामिन्यस्तमुक्तलाक्षारसतन्तुनिभभवत्स्वरूपध्यायिनं प्रद्युम्नस्य कन्दर्पस्य सीम्नि सीमायां मर्यादायां सुभगत्वगुणं सौभाग्यगुणवन्तं ध्यायन्ति, सौन्दर्येण कामनिर्विशेषं हृदये कामज्वरोपशमनकरं चिन्तयन्तीत्यर्थः। प्राग्वदत्रापि उपासनातत्फलमपि ज्ञेयम्॥ १४॥

भङ्ग्यन्तरेण प्रागुक्तं ध्यानं सोपायमाह—

आधारमारुतनिरोधवशेन येषां
सिन्दूररञ्जितसरोजगुणानुकारि ।
दीप्तं हृदि स्फुरति देवि! वपुस्त्वदीयं
ध्यायन्ति तानिह समीहितसिद्धसाध्याः ॥ १५ ॥

हे देवि ! जगत्सर्जनाक्रीडातत्परे द्योतनादिसतत्त्वे वा येषां हृद्यनाहतप्रदेशे त्वदीयं शक्तिकुण्डलिकारूपं वपुः स्वरूपं निष्कलं कामकलाख्यं स्फुरति भासते। कीदृशं आधारे मूलाधारचक्रे मारुतस्य प्राणापानात्मकस्य वायोर्निरोधवशेन गुरूक्तयुक्त्या शक्त्युत्थापनपूर्वं सौषुम्नेन पथोद्गच्छद्वह्निकुण्डलिनीसञ्चारपरिशीलनात्मकेनोर्ध्वरेचकेन दीप्तं प्रस्फुरत्प्रकाशं अत एव सिन्दूरेण रञ्जितो रक्तः सरोजगुणो बिसतन्तुस्तस्यानुकारि तदुपमं मूलाधाराद्यावद्धृदयं रक्तपद्मगुणनिभं विद्युत्कोटिदीप्तमित्यर्थः तानिह जगति समीहितेषु भोगापवर्गात्मकेष्वभीष्टार्थेषु, सिद्धं समासादितं साध्यमुपेयं वस्तु यैस्ते समीहितसिद्धसाध्या निष्कामाः अपि ध्यायन्ति किमु पुनः सकामाः इत्यर्थत आक्षिप्तं भवति। अथ च समीहिता अभीष्टा मनोरथा भोगमोक्षपरमार्थैकरूपाः सिद्धाः संपन्ना येषां ते तादृशाः साध्याख्याः देवताविशेषा ध्यायन्ति स्मरन्ति। ये सिन्दूर इति प्रागुक्तध्यानानुवादरूपमेतत् ॥ १५ ॥

पूर्वोक्तध्यानमर्कमण्डलगत्वेन सफलं वर्णयति—

ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति
रूपं तवाम्ब ! नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणभिन्न-
वक्षःस्थला मृगदृशो वशगा भवन्ति ॥ १६ ॥

हे अम्ब ! मातर्ये तव रूपं नवयावकस्य सान्द्रलाक्षारसस्य पङ्कव-

त्पिङ्गं शोणवर्णमरुणमण्डलमध्यवर्ति अर्कमण्डलान्तः स्थितं तत्र ध्येयत्वात्। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (महाना० १०-१) इति श्रुतेः, अन्तरधिकरणे प्रतिपादितत्वात्। अथ चार्ककुण्डलिनीस्थं सदैव चिन्तयन्ति स्मरन्ति। तेषां कुसुमायुधबाणभिन्नैः पुष्पशरशरैर्भिन्नं विद्धं वक्षःस्थलं हृदयं यासां ता मृगदृशो हरिणाक्ष्यः "अनेन वैशद्यरामणीयकविशालतादिगुणसाम्यं तासां नेत्रेष्विति गम्यते" वशगा अधीना भवन्ति। यावज्जीवं सर्वस्वदानादिना सेवन्ते इत्यर्थः। एवमुक्तयोर्द्वयोः श्लोकयोर्मध्यकूटाधिदैवतकामेश्वरीभजनफलमूह्यम्। ॥ १६ ॥

अथ वागीश्वरीध्यानं सफलं निर्दिशति—

**रूपं तव स्फुरितचन्द्रमरीचिशुभ्र-**
**मालोकते मनसि वागधिदैवतं यः।**
**निःसीम सूक्तिरचनामृतनिर्झरस्य**
**तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥ १७ ॥**

हे देवीति प्राग्वत्। तव रूपं वागधिदैवतं वाक्कूटाधिष्ठातृमयं वागीश्वर्यात्मकं स्फुरिता विशदप्रभावाश्चन्द्रमरीचयः शीतांशुरश्मयस्तद्वच्छुभ्रं धवलं मनसि हृदि (शिरसि) य आलोकते पश्यति ध्यायतीत्यर्थः। शिरसीति पाठान्तरं समुचितम्, यतः प्रथमस्तवे "ये त्वां पाण्डुरपुण्डरीके'ति' उक्तवागीश्वरीध्यानसादृश्याच्छिरःस्थान एव ध्येयत्वं ज्ञेयम्। निष्क्रान्तः सीम्नः सीमाया वा निःसीमो निरवधिः सूक्तिरचनारूपः सुभाषितसन्दर्भात्मामृतनिर्झरः शैत्याह्लादप्रकर्षकारित्वात्पीयूषरसप्रवाहो यस्य, तस्य समासादितवागीश्वर्यात्मकभवत्प्रसादस्य सम्बन्धिन्यो वाचो भारत्यः प्रसादमधुराः प्रसादाख्यसाहित्यगुणेन मधुरा माधुर्योपिता मनोज्ञाश्च प्रसरन्ति मुखान्निर्यान्ति। प्रवहत्सूक्तिसुधारसमधुरवाक्कविर्भवतीत्यर्थः। वाग्भवकूटसाधनफलं तु वामकेश्वरतन्त्रे—

'एतस्याः शृणु देवेशि ! [1]वाग्भवस्य तु साधनम् ।
धवलाम्बरसंवीतो धवलाम्बरमध्यगः ।।
पूजयेद् धवलैः पुष्पैर्ब्रह्मचर्यरतो नरः ।
धवलैरेव नैवेद्यैर्दधिक्षीरौदनादिभिः ।।
संकल्पधवलैर्वापि यथा[2]कामफलप्रदाम् ।
संपूज्य परमेशानि ! ध्यायेद्वागीश्वरीं पराम् ।।
बीजरूपामुल्लसन्तीं [3]ततोऽनङ्गपदावधि ।
ब्रह्मग्रन्थिं विनिर्भिद्य जिह्वाग्रे दीपरूपिणीम् ।।
चिन्तयेन्नष्टहृदयो ग्राम्यो मूर्खोऽतिपातकी ।
शठोऽपि यः [4]पदं स्पष्टमक्षरं वक्तुमक्षमः ।।
जडो मूकोऽतिदुर्मेधा गतप्रज्ञो विन[5]ष्टधीः ।
सोऽपि संजायते वाग्मी वाचस्पतिरिवापरः ।।
सत्पण्डितघटाटोपजेताऽप्रतिहतप्रभः ।
[6]सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित् ।।
[7]वाताहतसमुद्रोर्मिमालातुल्यैरुपन्यसेत् ।
सुकुमारतरस्फारवृत्ता[8]लङ्कारपूर्वकम्[9] ।।
पदगुम्फैर्महाकाव्यकर्ता देवेशि जायते ।
वेदवेदाङ्गवेदान्तसिद्धान्तज्ञानपारगः ।।
ज्योतिःशास्त्रेतिहासादिमीमांसास्मृतिवाक्यवित् ।
पुराणरसवादादिगारुडानेकमन्त्रवित् ।।
पातालशास्त्रविज्ञानभूततन्त्रार्थतत्त्ववित् ।
विचित्रचित्रकर्मादिशिल्पानेकविचक्षणः ।।
महाव्याकरणोदारशब्दसंस्कृतसर्वगीः ।
सर्वभाषारुतज्ञा[10]नी समस्तलिपिकर्मकृत्[11] ।।
नानाशास्त्रार्थशि[12]क्षादिवेत्ता भुवनविश्रुतः ।

1. बीजत्रितय 2. यथा कामं यथा लभेत् 3. चिदानन्दप्रबोधिनीम् 4. पादमेकं सुस्पष्टं 5. पिनष्टधीः 6. षट्तर्के 7. वातोद्धूत 8. रीत्य 9. पूर्वकैः 10. ज्ञान 11. वित् 12. शिल्पादिवेदवेदाङ्गविश्रुतः । इति का० पाठान्तराणि

सर्ववाङ्मयवेत्ता च सर्वज्ञो देवि ! जायते ॥' (४-२१-३३)
इति ॥ १७ ॥

ननु किमेवमसकृद्वर्णनया तन्नेत्याशङ्क्य साधारणकार्योक्त्या स्वाभिमतमपि द्योतयन् स्तौति—

शर्वाणि ! सर्वजनवन्दितपादपद्मे !
पद्मच्छदच्छविविडम्बितनेत्रलक्ष्मि ।
निष्पापमूर्तिजनमानसराजहंसि !
हंसि त्वमापदमनेकविधां जनस्य ॥ १८ ॥

शृणाति हिनस्त्यज्ञानकलुषनिकरमिति शर्वाणी तत्सम्बोधनं हे शर्वाणि ! अज्ञानतमोहारिणि ! तथा सर्वैः समस्तैर्जनैर्जननमरणभीरुभिर्जन्तुभिर्वन्दितौ प्रणतौ पादौ चरणौ पद्मे इव सुकुमारकान्तियुक्तत्वाद्यस्यास्तदामन्त्रणं, सर्वजनवन्दितपादपद्मे ! मृत्युभयहारिणीत्याशयः । पद्मच्छदानां सरोजपत्राणां च्छव्या कान्त्या विडम्बितोपमिता नेत्रलक्ष्मीश्चक्षुःश्रीर्यस्यास्तदामन्त्रणं, पद्मच्छदच्छविविडम्बितनेत्रलक्ष्मि ! पद्मपत्रायतरम्यलोचने, स्वदृगमृतासारवर्षणेनाह्लाददायिनीत्यर्थः, तथा निष्पापा विगलितकल्मषा मूर्तिर्देहो येषां तेषां जनानामनुग्राह्याणां मानसे मनस्येव मानससरोवरे राजहंसीव तदामन्त्रणं, यथा राजहंसो मानसरोवरे सानन्दं विहरते निवसति च तद्वत्स्वानुग्राह्यहृदये सततभासमाना विहरन्तीत्यर्थः । यद्वा—शुक्लैककर्मणां मनसि विराजमाना हंसवर्णात्मा जपामनुस्वरूपा हंसमन्त्रस्वरूपा वेत्यर्थः । तदुक्तं श्रीविद्यार्णवे—

'अजपाराधनं देवि ! कथयामि तवानघे ।
यस्य विज्ञानमात्रेण परब्रह्मैव देशिकः ॥
हंसः पदं परेशानि ! प्रत्यहं जपते नरः ।
मोहबद्धो न जानाति मोक्षस्तस्य न विद्यते ॥
श्रीगुरोः कृपया देवि ज्ञायते जप्यते यदा ।

उच्छ्वासनिःश्वासतया तदा बन्धक्षयो भवेत् ॥
उच्छ्वासे चैव निःश्वासे हंस इत्यक्षरद्वयम् ।
तस्मात्प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥
षड्भिःश्वासैर्भवेत्प्राणः षष्ट्या तैर्नाडिका मता ।
षष्टिनाड्या अहोरात्रं जपसंख्या जपामनोः ॥
एकविंशतिसाहस्रं षट्शताधिकमीश्वरि ।
जपते प्रत्यहं प्राणी स्पन्दानन्दमयीं पराम् ॥
उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ।
विना जपेन देवेशि जपो भवति मन्त्रिणः ॥
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ।
श्रीगुरोः कृपया देवि लभ्यते नान्यथा प्रिये ॥
एवं जपं महेशानि ! प्रत्यहं विनिवेदयेत् ।
गणेशब्रह्मविष्णुभ्यो हराय परमेश्वरि ॥
जीवात्मने क्रमेणैव तथा च परमात्मने ।
षट्सहस्राणि च पुनः सहस्रं च सहस्रकम् ।
पुनः सहस्रं गुरवे क्रमेण तु निवेदयेत् ॥
जपं निवेदयित्वा तमहोरात्रभवं प्रिये ।
सहजं परमेशानि न्यासं कुरु विचक्षणे ॥
ऋषिर्हंसोऽव्यक्तपूर्वं गायत्रंच्छन्द उच्यते ।
देवता परमादिस्तु हंसो हं बीज उच्यते ॥
सः शक्तिः कीलकं सोऽहं प्रणवस्तत्त्वमेव हि ।
नादस्थानं तथा श्वेतो वर्णस्तु परमेश्वरि ॥
उदात्तः स्वर इत्येवं मनोरस्य प्रकीर्तितम् ।
मोक्षार्थे विनियोगः स्यादेवं जानीहि पार्वति ॥
ततः षडङ्गविन्यासं कुर्याद् देहस्य शुद्धये ।
सूर्यं सोमं तथा देवि निरञ्जनमतः परम् ॥
निराभासं चतुर्थ्यन्तस्वाहान्तान् क्रमतो न्यसेत् ।
कवचान्तान्प्रविन्यस्य ततोऽनन्तपदं स्मरेत् ॥

तनुसूक्ष्मचतुर्वर्णानुक्त्वा ङेन्तं प्रचोदयात् ।
स्वाहान्तेनैव नयनमव्यक्तपदपूर्वतः ॥
प्रबोधात्मा चतुर्थ्यग्निजायान्तोऽस्त्रं निगद्यते ।
अस्य हंसस्य देवेशि ! निगमागमपक्षकौ ॥
अग्नीषोमावथो वापि पक्षौ तारः शिरो भवेत् ।
बिन्दुत्रयं शिखा नेत्रे मुखे नादः प्रतिष्ठितः ॥
शिवशक्तिपदद्वन्द्वं कालाग्निपार्श्वयुग्मकम् ।
अयं परमहंसस्तु सर्वव्यापी प्रकाशवान् ॥
सूर्यकोटिप्रतीकाशः स्वप्रकाशेन भासते ।
संहाररूपी हंसोऽयं विवेकं दर्शयत्यपि ॥
अजपा नाम गायत्री त्रिषु लोकेषु दुर्लभा ।'

इति । त्वं जनस्य वन्दनादिकारिणोऽनेकविधामापदं जननादिभयातङ्कदारिद्र्यरूपां हंस्यपाकरोषि, अतो ममापि तां दूरीकुरु इति प्रार्थना ध्वन्यते ॥ १८ ॥

ननु परमशिव एवाशेषाभीष्टसम्पादनचतुरत्वात् प्रार्थ्य इत्याशंक्य तस्यापि त्वयैव शक्त्या तथात्वप्रसिद्धिरित्याशयेनाह—

इच्छानुरूपमनुरूपगुणप्रकर्षं
संकर्षिणि ! त्वमभिसृत्य[1] यदा बिभर्षि ।
जायेत स त्रिभुवनैकगुरुस्तदानीं
देवः शिवोऽपि भुवनत्रयसूत्रधारः ॥ १९ ॥

हे संकर्षिणि ! परभैरवस्य स्वायत्ततयावभासयित्रि ! कालसंकर्षिणि ! पराशक्ते ! इच्छानुरूपमेषणीयज्ञेयकार्यविषयेच्छानुगुणं, अनुरूपस्तत्तद्वस्त्वनुगुणो गुणानां विसर्जनीयसत्त्वादीनां प्रकर्षोऽतिशयस्तं त्व-

---

1. 'अभिमृष्य' इति पाठान्तरम् ।

मभिमृष्य तदाभिमुख्येन स्वात्मानं समुल्लास्य विस्फार्य यदा बिभर्षि धत्से। अथवा इच्छानुगुणंरूपमर्थाच्छिवस्येच्छानुरूपं तत्तद्वर्णकपरिग्रहणमयानाश्रितशिवादिसकलान्तप्रमातृभावावभासनस्वरूपमनुरूपाणां तत्तत्सदाशिवाद्यवस्थौचित्यावभासमानानां गुणानां सर्वज्ञत्वादिगुणगणानां प्रकर्षस्तारतम्यातिशयो यत्र तत् अभिसृत्याभ्युपगम्येत्यर्थः। यदुक्तम्—

'भैरवीरूपी कालः सृजति जगत्स्थावरादिकीटान्तम्।
इच्छावशेन यस्याः सा त्वं भुवनाम्बिके ! जयसि ॥'

तदानीं स प्रसिद्धः कामेश्वरात्मा शिवस्त्रिभुवनेषु भवाभवादिष्वेको मुख्यो गुरुर्विश्वकार्यनिर्वाहक उपदेष्टा च देवो विविधरसभरिताद्भुतविश्वनाटकोल्लासननिर्वाहणादिक्रीडाशालो भुवनत्रयस्य सूत्रधार इव सम्पादको जायेत, त्वयैव जगत्सर्जनादिकार्यं विधत्ते, त्वां विना तस्याकिञ्चित्करत्वात्। यथा कश्चित्सूत्रधारः शृङ्गारादिरसमाधुर्यभरितं सद्बीजादिगर्भं नाटकं तत्तदभिनेयाभिव्यञ्जनीयसाक्षात्कार्यरसार्पणनैपुण्यशालिन्या नट्या प्रस्ताव्य प्रेक्षकाणां रसास्वादनेन नाट्याचार्यत्वं लोके सूत्रधारसंज्ञां च प्राप्नोति। तद्वद्विश्वक्रीडाचिकीर्षुः शिवोऽपि भवत्यैव सुश्लाघ्यकलोपेतया त्रैलोक्यनाट्यं प्रस्तौति इत्यर्थः। अथ च त्रिकनये शाक्तीययागविधौ सृष्टिकाल्याद्युदयक्रमतः पार्यन्तिकी महाकाली महाभैरवचण्डोग्रघोरकालीति या परा पारमेश्वर्युक्ता सैव कालसंकर्षिणीत्युच्यते। तदुक्तं श्रीक्रमस्तोत्रे—

'क्रमत्रयत्वाष्ट्रमरीचिचक्रसञ्चारचातुर्यतुरीयसत्ताम्।
वन्दे महाभैरवघोरचण्डकालीं कलाकाशशशाङ्ककान्तिम् ॥'

इति। अन्यत्र च—

'श्रीमत्सदाशिवपदेऽपि महोग्रकाली
भीमोत्कटभ्रुकुटिरेष्यति भङ्गभूमिः।

इत्याकलय्य परमां स्थितिमेत्य काल-
संकर्षिणीं भगवतीं हठतोऽधितिष्ठेत् ॥'

इति यद्वा—प्राणादिपञ्चकात्मनः कालस्यान्तर्बहीरूपतया समुल्लसनात्संकर्षिणीति। तथा चाचार्याभिनवगुप्तपादाः—

'नासाग्रे त्रिविधं कालं कालसंकर्षिणी सदा।
मुखस्था श्वासनिश्वासकलने हृदि कर्षति ॥
पूरकैः कुम्भकैर्धत्ते ग्रसते रेचकेन तु।
कालं संग्रसते सर्वं रेचकेनोत्थिता क्षणात् ॥
इच्छाशक्तिः परा नाम्ना शक्तित्रितयबोधने।
याज्या कर्षति यत्सर्वं कालाधारप्रभञ्जनम् ॥'

इति, इदं व्याचष्टे श्रीजयरथः—इह खलु मुखस्था कालसंकर्षिणी भगवती सदा पार्श्ववाहद्वयात्मश्वासनिश्वाससंकलनेन हृदि मध्यधाम्नि नासायाश्च शक्तेरग्रे त्रिविधं प्राणापानोदानलक्षणं कालं कर्षति तेन तेन रूपेण संचारयति। यतो रेचकेन संहरति पूरकेन प्रवेशं ददाति, कुम्भकेन धारयति, ऊर्ध्वरेचकेन तत्तत्कारणपदोल्लङ्घनक्रमेणोत्थिता सती सर्व कालं क्षणादेव सम्यगनवच्छिन्नमेव स्वरूपतापादनक्रमेण संहरतीति। 'सेच्छायाः प्रथमा त्रुटिः' इत्युक्त्या परेयमिच्छाशक्तिः। इच्छाद्यात्मनः शक्तित्रितयस्योत्पत्तिभूः, प्रक्रान्तेन कालसंकर्षिणीलक्षणेन नाम्ना याज्या यदियं सर्वं प्राणादिपञ्चकात्मकं कालाधारं प्रभञ्जनं कर्षयत्यन्तर्बहीरूपतया समुल्लासयतीत्यर्थः। यदुक्तं 'यामले'—

'अयं पथद्वये कालः स्थूलश्चरति योगिनाम्।
सव्यापसव्ये मध्ये च शक्तित्रयविभूषितः ॥
सा ग्रसेत् त्रिविधं कालं कालसंकर्षिणी तथा। इति।
कालसंकर्षिणी नाम्ना कालं मुखबिले स्थितम्।
श्वासनिश्वासकलने तस्य संकर्षणं हृदि ॥
पूरकेण समन्तात्तु कुम्भकेन च धारयेत्।

रेचकेनोत्थिता देवी कालं संग्रसते क्षणात् ।। इति ।
इच्छाशक्तिः परा नाम्ना शक्तित्रितयबोधने ।
याज्या कर्षयते सर्वं कालाधारप्रभञ्जनम् ।।'

इति । यद्वोत्तराम्नायेश्वरी अनाख्यात्वेन प्रसिद्धा कालसंकर्षिणी देवी चतुराम्नायेषु श्रीविद्यार्चायामर्च्यत इति । अतोऽस्याः स्वयमकालकलितत्वान्नित्यतादिविकल्पैरप्यनिर्वाच्यत्वं स्यात् । यदाहुरुत्पलदेवाचार्याः—

'न सदा न तदा न चैकदेत्यपि सा यत्र न कालधीर्भवेत् ।
तदिदं भवदीयदर्शनं न च नित्यं न च कथ्यतेऽन्यथा ।।' (उ० स्तो० १२-५)

इति, 'ज्ञः कालकालो गुणी सर्वविद्यः' इति श्रुतेः (श्वेता० ६-२) ।।१९।।

इदानीं देव्या वैभवप्रदर्शनाशयेन शक्तिस्वरूपत्वमेवान्यत्राप्यतिदिशति—

योऽयं चकास्ति गगनार्णवरत्नमिन्दु-
योऽयं सुरासुरगुरुः पुरुषः पुराणः ।
यद्वाममर्धमिदमन्धकसूदनस्य
देवि ! त्वमेव तदिति प्रतिपादयन्ति ॥ २० ॥

हे देवि ! योऽयं गगनमेवार्णवो रत्नाकरस्तत्र स्थितस्तदुद्भवो वेन्दुः सुधांशुश्चकास्ति दीप्यते स त्वमेवासि त्वत्स्मितकान्त्यंशमात्रत्वात् । आचार्यैरप्युक्तम्—

अम्ब ! त्वदक्ष्णोरणुरंशुमाली तवैवमन्दस्मितबिन्दुरिन्दुः ।

इति, अत्र गाम्भीर्यापारत्वादिसादृश्याद्गगनेऽर्णवत्वारोपः ह्लादकामलत्वादिना इन्दौ रत्नत्वारोपः । यश्चायं सुरासुराणां देवदानवानां गुरुर्मान्यः पुराणः पुरुषः स्रष्टा ब्रह्मा, यद्वा—पुराणपुरुषो विष्णुः सोऽपि

त्वमेवासि । तस्यापि त्वद्रूपत्वात् तथा च 'हरिवंशे' नारदः—

'प्रकृत्याः प्रथमो भाग उमादेवी यशस्विनी ।
व्यक्तः सर्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः ॥'

इति । यच्चान्धकसूदनस्यान्धकाख्यासुरारेः शिवस्यार्धनारीश्वरत्वादिदं वाममर्धं सव्यभागस्तत् सर्वं त्वमेवासि इति प्रतिपादयन्ति समामनन्ति बुधाः इति शेषः । अयमुत्तानार्थः । वस्तुतस्तु सोमसूर्याग्निमयत्वत्पुरस्थचक्रत्रये यद्रश्मिनिचयवैभवं स भवत्या एव महिमावधार्यः इत्यतिरहस्यार्थो ज्ञेयः ॥ २० ॥

अथ वाक्प्रसरोत्पादनं वागीश्वर्या ध्यानमाम्रेडयति—

ध्यातासि हैमवति ! येन हिमांशुरश्मि-
मालामलद्युतिरकल्मषमानसेन ।
तस्याविलम्बमनवद्यमनन्तकल्प-
मल्पैर्दिनैः सृजसि सुन्दरि ! वाग्विलासम् ॥ २१ ॥

हिमवतोऽपत्यं स्त्रीति तदामन्त्रणं हे हैमवति ! हिमाचलतनये, यद्वा हैमवत्युमे ! यदुक्तं 'केनोपनिषद्भाष्ये'-'उमा हैमवतीमिति' । यद्वा हेम्नो विकाराणि हैमानि भूषणानि तानि सन्त्यस्या इति । अकल्मषं विमलं मानसं मनो यस्य तेनाकल्मषमानसेन येन भक्तिमता हिमांशोः शीतांशोः रश्मिमाला किरणावलिस्तद्वदमला धवला द्युतिश्छविर्यस्या शीतलामृतसेचिनी शुभ्रवर्णेत्यर्थः । अत एव हिमवत्प्रभवत्वेन हैमवतीति संबोधनं साभिप्रायम् । एतादृशी त्वं ध्यातासि विभाव्यसे । हे सुन्दरि! स्पृहणीयसौभाग्ये ! तस्याल्पैर्दिनैरचिरेणैवाविलम्बमस्खलितमनवद्यं श्रुतिकटुत्वादिदोषरहितं प्रसादादिगुणगणोपेतमनन्तकल्पममितप्रबन्धरचनासमर्थमनन्तदेशीयं च, अथवान्तोऽवसानस्तदभावादनन्तः 'ईषदसमाप्तौ कल्पप्प्रत्ययः, तेनापूर्णोऽनन्तोऽनन्तकल्पम् वाचां गिरां विलासं

विचित्ररसनिर्भरकविताप्रसरं सृजसि समुत्पादयसि। इदमपि वागीश्वर्या ध्यानाभिप्रायतो बोध्यमिति ॥ २१ ॥

अधुना नानासम्प्रदायार्थानुगतैस्तत्तन्नामभिः देवीं प्रतिपादयन् आह—

त्वां व्यापिनीति समना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति।
त्वां मालिनीति ललितेत्यपराजितेति
देवि! स्तुवन्ति विजयेति जयेत्युमेति ॥ २२ ॥

शिवस्येच्छाख्या परमा सूक्ष्मा शक्तिर्मन उत्क्रम्य गतोन्मनाख्यानवच्छिन्नस्वप्रकाशस्फुरत्तया शिवत्वरूपाभिन्ना, सैव यदा प्रकाशात्ममहासत्तारूपमात्मानं समस्तासूत्रणासहिष्णुं क्षोभयते शून्यातिशून्यादिधरान्तसमग्रजगदासूत्रणात्मना स्फुरति, तदा परप्रमातृपदावरूढा आसूत्रिताशेषमन्तव्यमननरूपत्वात्समनाख्या शक्तिरित्युच्यते। असावेव समनाख्या शक्तिः प्रथमोल्लेखकल्पतया स्फुरन्ती यदाभास्यं विश्वं क्रोडीकरोति। क्रोडीकारः स्वात्मैकतयाभासनम्। तदा शून्यातिशून्यात्मा व्यापिनीत्युच्यते। सैव यदा प्रसरोन्मुखी स्वाभेदात्मतानिमज्जनेन शून्याभासतयाभास्येदन्तया प्रथयति। तदा कुण्डलिन्याख्या महाशक्तिरित्युच्यते, गर्भीकृताशेषविश्वसृष्टिसंहारप्रपञ्चप्रथममहासृष्टिशक्तिरूपतया स्फुरन्तीत्यर्थः। इयमेव समस्तविश्वस्यानुन्मिषतत्वेनान्तर्गर्भीकाराद्वर्ध्वकुण्डलिनीत्यभिधीयते। नत्वत्र मूलकुण्डलिनीयमधः स्थेति भ्रमितव्यम्। व्यापिन्यादिसाहचर्यान्महाशक्तिपदं प्रसरोन्मुखं तुरीयं मान्त्रोन्मेषीयं ज्ञेयम्। अत्र समनानन्तरं व्यापिनीत्यादिक्रमः स्तुतिकृता तु वृत्तभङ्गानुरोधनोत्क्रमतो निबद्धम्। यदुक्तम्—

'शिवो ह्यनादिमान् धाम शाश्वतः प्रथमोऽचलः।
इच्छया तु यदा देवि! प्रसरत्यविलम्बतः ॥
सा शक्तिः परमा सूक्ष्मा उन्मना शिवरूपिणी।

अस्तित्वमात्रमात्मानं क्षोभ्यं क्षोभयते यदा ॥
समना सा विनिर्दिष्टा शक्तिः सर्वाध्ववर्तिनी ।
क्रोडीकरोति या विश्वं संहृत्य सृजते पुनः ॥
कुण्डल्याख्या महाशक्तिः ॥'

इति । एवं त्रिशक्तिरूपिणीं त्वां स्तुवन्ति प्रतिपादयन्ति बुधा इति शेषः। एवं प्रथमे पादे त्रिकमते सम्प्रदायार्थः। काम्यतेऽभिलष्यते कमनीयतया स्वात्मत्वेन योगिभिरिति कामः कामेश्वरः परमशिवः सोऽस्त्यस्याः स्वाभेदेन भर्तृभूतत्वेन वेति कामिनी तदभिन्ना कामेश्वरी आद्यसुन्दरी। यद्वा कामः सदाशिवादिपृथिवीपर्यन्तजगत्सर्जनादिक्रीडेच्छा तद्वती जगत्सर्जनादिशीलेत्यर्थः। तदुक्तं 'रुद्रायामले'—

'तयैतत्सृज्यते विश्वमित्यादि ।'

यद्वा कामयते इति कामिनी 'सोऽकामयत बहुस्यां प्रजायेय' इति श्रुते र्विश्वसिसृक्षोन्मुखी । अपि च कामयते इति कामिनी कमुधातोः कान्त्यर्थत्वात्, कान्तिरिच्छा रुचिश्च, तेन कामेश्वरविषयौत्सुक्यवती। तथा मातृमानमेयरूपेण वामेश्वर्यादिचक्रात्मना वा विरोचमाना चेत्यर्थः। अथवा कामिनी भैरवी उत्तरसिंहासनदेवता, तद्ध्यानं यथा—

'कामिनी भैरवी चेयं भयविध्वंसिनीति वा ।'

इत्यारभ्य—

'ध्यानमस्या वदामि ते
आताम्रार्कयुताभासां रत्नभूषणभूषिताम् ।
पाशाङ्कुशाभयवरान्धारयन्तीं शिवासनाम् ॥
मुण्डमालावलीरम्यां चिन्तयेद्भैरवीं पराम् ।'

इति । अपि च—कामिनी—कामेश्वरीयोगिनीरूपा। तदुक्तं 'विद्यार्णवे'—

'अथ कामेश्वरीं वक्ष्ये सर्वकामफलप्रदाम् ।'

इत्यादि—

'कामेश्वरीं शशाङ्कस्थां खेलत्खञ्जनलोचनाम् ।
सदा लोलगतिं कान्तां कुसुमास्त्रशिलीमुखाम् ॥'

इत्यन्तम् । तथा कमले पद्मेऽस्याःस्त इति कमला 'अर्शाद्यच्' पद्मद्वयधारिणी लक्ष्मीस्तद्रूपा । यद्वा काम्यते सर्वैरिति कमला 'वृषादित्वात्कलच्' । कं भास्करं मलते रुच्या पुष्णातीति कमला। कं वायुं वेगेन ध्रियते इति वा, तयोर्भासनजवनशक्तिरूपेत्यर्थः । 'येन सूर्यस्तपते तेजसेद्धः इति भीषा[1]स्मात् पवते वातः' इति च श्रुतेः । कं ब्रह्माणं धारयतीति ब्राह्मी शक्तिस्वरूपेति च ।

'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम् ॥'

इति मेदिनीकोषात् । अथ च कं दक्षप्रजापतिमलति स्वजन्मना भूषयतीति कमला । तद् ध्यानं श्रीविद्यार्णवीयद्वाविंशे श्वासे—

'माणिक्याभा हरगिरिनिभैःकुञ्जरेन्द्रैश्चतुर्भि-
र्नासाग्रोद्यन्मणिमयघटाम्भोभिरासिच्यमाना ।
अम्भोजस्था वरसरसिजद्वन्द्वकाभीतिहस्ता
लक्ष्मीः पायादमरनिकरैः सेविताङ्‌घ्र्यम्बुजा सा ॥'

इति । तथा कलाः कामेश्वर्यादिविचित्रान्ताः प्रतिपदादिपञ्चदशतत्तत्तिथ्यधिष्ठातृदेवताः मध्यत्रिकोणपार्श्वस्था अकारादिवर्णवाच्याः शक्तयस्ता विद्यन्ते आवरणतया यस्याः सा कलावती षोडशी कलेत्यर्थः । तदुक्तं 'सुभगोदये'—

'दर्शाद्याः पूर्णिमान्ताद्याः कला पञ्चदशैव तु ।
षोडशी तु कला ज्ञेया सच्चिदानन्दरूपिणी ॥'

इति, 'तन्त्रराजे' तु—

'आद्याया ललितायाःस्युरन्याः पञ्चदशाङ्गगाः ।
ललिताङ्गत्वरूपेण सर्वसामान्यविग्रहा ॥'

'आत्मैवास्य षोडशी कले'ति बृहदारण्यकोक्तेः (बृह० १-५-१५)।

---

1. भीषास्माद्वातः पवते । इत्यपि पाठः ।

योनिवर्गः कलाशरीरमिति (१-३) शिवसूत्रोक्त्या कर्मपरत्वेन कलाशब्दस्य व्याख्यातत्वात्तद्वती। संकुचितक्रियाशक्तिभासनात्कार्ममलेन पशून् बन्धयित्रीति वा। यद्वा कला विश्वशक्तयः सन्त्यस्या इति कलावती। तथा 'श्रीमङ्गलायाम्'—

शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांश्च महेश्वरः। (१७)

इति। श्रीशिवसूत्रेषु—

स्वशक्तिप्रचयोऽस्य विश्वम् इति। (३-३०)

कलाः शिरःपाण्याद्यवयवरूपास्तद्वती पराकला। तद् ध्यानं यथा—

'अग्रबिन्दुपरिकल्पिताननामन्यबिन्दुरचितस्तनद्वयीम्।
नादबिन्दुरशनागुणास्पदां नौमि ते परशिवे! परां कलाम्॥

इति, रहस्यविद्या। कला चन्द्रकला वा भक्तसंजीवनाय अस्या अस्तीति कलावती। यद्वा—कला ब्राह्म्यादिशक्त्यंशभूता अक्षोभ्यादिचतुःषष्टिकलास्तद्युता वा, कला अष्टात्रिंशत्संख्यास्ता वह्नेर्दश, चन्द्रस्य षोडश, सूर्यस्य द्वादश कलाः पूजापद्धतौ प्रसिद्धास्तद्वती तदात्मिका। अन्याश्च कला उत्पत्तिजागरादयः यथा—

'उत्पत्तिर्जागरो बोधो व्यावृत्तिर्मनसः सदा।
कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थितम्॥
जाग्रत्सर्वगुणैः प्रोक्ता केवलं शक्तिरूपिणी।

इति, तथा—

'मरणं विस्मृतिर्मूर्च्छा निद्रा च तमसावृताः।
सुषुप्तेस्तु कला ज्ञेयास्ताः कलाः श्रीशिवात्मिकाः॥'

तथा—'अभिलाषो भ्रमश्चिन्ता विषयेषु पुनः स्मृतिः।
कलाचतुष्टयं देवि! स्वप्नावस्थाभिधीयते॥
शिवरूपाः शक्तिरूपास्ताः कलास्त्रिपुरात्मिकाः।'

तथा—'वैराग्यं च मुमुक्षुत्वं समाधिर्विमलं मनः।
सदसद्वस्तुनिर्धारस्तुर्यावस्था इमाः कलाः॥'

तथा दूतीयागप्रकरणे षोडशकला आन्तरीदूतर्यादय उक्ताः। एवं बिन्द्वर्धचन्द्ररोधिन्यादीनां स्वच्छन्दसंग्रहादावुक्तास्तत्समस्तकलायुक्ता तत्स्वरूपेत्यर्थः यद्वा कलाः पञ्चसु कृत्येषु, सृष्टौ दश, स्थितौ द्वाविंशतिः, संहृतावेकादश, तुर्ये त्रयोदश, एव पञ्चाशत्संख्यास्तदतीते सर्वोत्तीर्णायां भासायां विभागाभावान्निष्कलत्वं तद्वती वा, अस्यार्थस्यातिरहस्यात्तदवबोधाय गुरूपासनैव शरणं रहस्यभङ्गभिया नोन्मील्यते। तदुक्तम्—

'सृष्टौ दशकलाः स्थितौ द्वाविंशतिर्भवन्ति शक्तयः।
एकादश संहारे त्रयोदश तास्तु तुरीयपर्वणि ॥
भासायां न विकल्पः स्फुरति स्फुरदेकनिष्कलश्रियाम्।
यदि प्रतिबिम्बगत्या स्फुरति परं षोडशाधिका देवी ॥'

इति। यद्वा—ईशानस्य पञ्च, तत्पुरुषस्य चतस्रः, अघोरस्याष्टौ, वामदेवस्य त्रयोदश, सद्योजातस्याष्टौ, इति संकलय्याष्टात्रिंशत्संख्याः कला यद्वा—आदिक्षान्तवर्णकलाः सन्त्यस्या इति कलावती अनुत्तरमहामन्त्ररूपेत्यर्थः। अथ च तत्कलामयी मातृकेत्यर्थः। पूर्णप्रकाशात्मनः शब्दराशेर्भगवतो येयं परा पारमेश्वरीशक्तिर्बहिरौन्मुख्याभावादान्तरत्वात्प्रमात्रैकात्म्यशालिनी प्रतियोगिनो विश्वाभासस्याभावमवभासयन्ती तदन्वनच्कोल्लासवृत्तिसमाश्रयणक्रमेणविश्वाभासावबिभासयिषया मलते धत्ते दर्पणवद्विश्वं परापरादिभावेनावभासतीति मालिनी पराशक्तिः। अथ च माल्यते धार्यते रुद्रैर्नादिफान्ताक्षराधिष्ठातृवर्गैरात्मतयाभ्युपगम्यते, मलते भोगमोक्षस्वरूपं धत्ते इति वा। अथ च मालिनी त्रिपुरमालिनी षष्ठचक्रेश्वरी तद्रूपा, नामैकदेशग्रहणन्यायात्। यद्वा—माला पुष्पमाला सञ्जाता तत्तद्वश्याकर्षणादिफलनिमित्तमस्या इति मालिनी पुष्पिणीति। मा शब्दवाच्यं संहारं राति लाति वा इति रलयोरैक्यस्मरणात्संहारस्यालिनी विम्रष्ट्रीत्यर्थः। यदाहुः श्रीमदाचार्यपादाः—

'माल्यते मालिता रुद्रैर्धारिका सिद्धिमोक्षयोः।
फलेषु पुष्पिता पूज्या संहारध्वनिषट्पदी ॥

संहारदानादानादिशक्तियुक्ता यतो रलौ।
एकत्वेन स्मरन्तीति शम्भुनाथो निरूचिवान् ॥'

इति, शिवशक्त्यात्मकतायामप्यस्यां शाक्तस्वभावस्योद्रिक्तता, अत एवाशेषसिद्धिसंपादने सामर्थ्यं पूर्णं, तदुक्तम्—

'अथान्यत्संप्रवक्ष्यामि मालिन्याः कर्म चोत्तमम्।
वश्यविद्वेषणोच्चाटस्तोभस्तम्भनमारणम् ॥
ध्यानमात्राद्भवेद्देवीति।'

यद्वा—क्षुब्धाया विसर्गशक्तेर्मालिनीति आगमिकं व्यपदेशान्तरम्। यदा क्षोभ्यक्षोभकात्मनां योनिबीजानां क्षुभिक्रियायां कर्तृकर्मरूपसम्बन्धे परस्परसंघट्टात्मावेशो जायते, तदा विश्वस्वरूपधारणान्मालिनीत्युच्यते। तदुक्तम्—

'क्षोभ्यक्षोभकतावेशान्मालिनीं तां प्रचक्षते।
बीजयोनिसमापत्तिविसर्गोदयसुन्दरा ॥
मालिनी हि पराशक्तिर्निर्णीता विश्वरूपिणी।

इति, तथा—

'प्रायश्चित्तेषु सर्वेषु जपेन्मालामखण्डिताम्।
भिन्नां वाप्यथवाभिन्नां व्यतिक्रमबलाबलात् ॥
सकृज्जपात्समारभ्य यावल्लक्षत्रयं प्रिये।' इति।
'कां कां सिद्धिं न वितरेत्किं वा न्यूनं न पूरयेत्।'

इति च, यद्वा—मालावत्वान्मालिनी 'व्रीह्यादित्वादिणि, एकपञ्चाशन्मातृकाभिमानिन्या देवताया मालिनीति सञ्ज्ञा तद्रूपा वा। यद्वा—देव्याः सखी मालिनी नाम्नी तद्रूपा वा। तदुक्तं 'वामने' पार्वतीविवाहप्रकरणे सप्तपदीसंक्रमणं प्रकृत्य—

'ततो हराङ्घ्रिर्मालिन्या गृहीतो दायकारणात्।
किं याचसे ददाम्येष मुञ्चस्वेति हरोऽब्रवीत् ॥
मालिनी शङ्करं प्राह मत्सख्यै देहि शङ्कर।

सौभाग्यं निजगोत्रीयं ततो मोक्षमवाप्स्यसि ।।
अथोवाच महादेवो दत्तं मालिनि ! मुञ्च माम् ।'

इत्यादि वृत्तविशेषरूपा मन्दाकिनीरूपा वा मालिनी ।

'मालिनी वृत्तभेदे स्यान्मालाकारस्त्रियामपि ।
चम्पानगर्यां गौर्यां च मन्दाकिन्यां च मालिनी ।।' इति,

विश्वः । 'मालिनी सप्तभिः सा स्यादिति' वचनात् सप्तवर्षा कन्यापि मालिनी तद्रूपेति । मालिन्या ध्यानं यथा—

'रक्तवस्त्रधरां देवीं पञ्चवक्त्रधरां शिवाम् ।
निवृत्यादिकलायुक्तां प्रतिवक्त्रं त्रिलोचनाम् ।।
पाशाङ्कुशधरां देवीं सुधासिक्तकपालिनीम् ।
इच्छादित्रयसंयुक्तां शूलं दक्षकरे धराम् ।।
रक्तपङ्कजमध्यस्थां मालिनीं भावयेच्छिवाम् ।।'

इति, शृङ्गाराद्रत्यादेर्भावान्मनोविकाराच्च जातो विलासविशेषो ललितं, भ्रूनेत्रादिक्रियासचिवकरचरणाङ्गविन्यासो वा, प्रियं कामेश्वरं प्रतिभावाविष्कृतं वा, तदस्त्यस्या इति ललिता, ललितमत्यन्तसौन्दर्य-मनुपमसौन्दर्यं वा विद्यतेऽस्या इति वा, 'ललितं त्रिषु सुन्दर'मिति को-शः । तदुक्तं—

'ललितेति नाम युक्तं तव किल दिव्या नवा वृत्तयः ।
धनुरैक्षवमस्त्राण्यपि कुसुमानि तथाखिलं ललितम् ।।'

इति । ललिता सौभाग्यसुन्दरी । अर्शाद्यच् । ललितं शृङ्गारहाव-जन्यः क्रियाविशेषस्तद्वती, तेन शृङ्गाररसप्रधानेयं मूर्तिरिति । अथवा लोकानतीत्य विलसनाल्ललिता । यद्वमरीचिवृन्दान्यतिक्रम्योपरितने बिन्दुस्थानमध्ये ललते नितरां शोभते वा । तदुक्तं 'पाद्मे'—

लोकानतीत्य ललते ललिता तेन सोच्यते ।

इति । यद्वा—ललिताख्या भैरवी । तद्ध्यानं यथा—श्रीविद्यार्णवीये

सप्तमे श्वासे—दक्षिणसिंहासनदेवतां प्रकृत्य—

'उद्यत्सूर्यसहस्राभां माणिक्यमुकुटोज्ज्वलाम् ।
रत्नकुण्डलमुक्तालिपदकाङ्गदभूषणाम् ॥
रत्नमञ्जीरसुभगां रक्तवस्त्रानुलेपनाम् ।
पाशाङ्कुशौ पुस्तकं च दधतीमक्षमालिकाम् ॥
बाल्यलीलापरां देवीं कुमारीरूपधारिणीम् ।
सर्वाङ्गसुन्दरीं ध्यायेत्सर्वसंपत्तिहेतवे ॥' (पृ० १५५-१-२-३)

इति, न पराजिता अपराजिता दैत्ययुद्धादौ सदैव जयशालिनी । अपराजिता जयदुर्गारूपा वा । यद्वापराजिताः, ईशब्रह्मविष्णवः पर्यङ्कपादरूपतया सन्त्यस्याः, अपराजिता विद्यास्वरूपा च ।

'अपराजित ईशाजेष्टयन्तरेनाजिते त्रिषु ।
गिरिकर्णी जया दुर्गा शतपर्णीषु योषिति ॥'

इति मेदिनी । 'देवीपुराणे तु'—

'विजित्य पद्मनामानं दैत्यराजं महाबलम् ।
त्रिषु लोकेषु विख्याता विजया चापराजिता ॥'

इति, तथा विशिष्टो ब्रह्मविष्णुपुरन्दरादिभिरपि दुःसाधो जयो यस्याः सा विजया, चतुर्विधसंविदानन्दरूपा वा । 'विजयं चैव काश्मीरे' इति देवीपुराणोक्तशिवतीर्थपरिगणनायां विजयाख्यशिवस्वरूपा वा । अथवा विजयाख्यप्रासादविशेषो विश्वकर्मशास्त्रप्रसिद्धस्तद्रूपा वा, विजयाख्यो मुहूर्तो वा तादृशकालरूपिणीत्यर्थः । तदुक्तं 'मुहूर्तशास्त्रे'—

'आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धिदः ॥
एकादशो मुहूर्तो यो विजयः परिकीर्तितः ।
तस्मिन् यात्रा प्रकर्तव्या सर्वैर्विजयकाङ्क्षिभिः ॥'

इति । जयस्वरूपत्वाज्जया, वराहशैले स्थिता जयाख्या देवी, ज-

यते इति जया जयन्ती लब्धोत्कर्षा इत्यर्थः। जयाख्यतिथिस्वरूपा वा। शिवासखीरूपा वा, अग्न्युत्पादशक्त्युपेतारणीस्वरूपा वा।

'जया जयन्ती तिथिभित्पथ्योमा तत्सखीषु च।
अग्निमन्थे ना जयन्ते विजये च युधिष्ठरे॥'

इति मेदिनी। अथ च अपराजिताद्यास्तिस्रो देव्यो वामस्रोतसि तुम्बुरुनाथस्य परिवारदेवीत्वेनाम्नाताः। तदुक्तं 'श्रीनेत्रतन्त्रे'—

'चतुर्भुजा त्रिनेत्रा च टंककन्दलधारिणी।
दण्डाक्षसूत्रहस्ता च प्रेतोपरि विराजते॥
जया देवी तु विजया रक्तवर्णा चतुर्भुजा।
चतुर्वक्त्रा त्रिनेत्रा च शरकार्मुकधारिणी॥
खड्गचर्मधरादेवी उलूकोपरिसंस्थिता।

तथा—

भिन्नेन्द्रनीलसदृशी चतुर्वक्त्रविभूषिता॥
चतुर्भुजा त्रिनेत्रा च पाशाङ्कुशधरा तथा।
रत्नपात्रगदाहस्ता दिव्यासनसुसंस्थिता॥
सौवर्णाम्बरसंवीता स्वर्णभूषणभूषिता। (११ अधि० १२-१८)
अपराजितेति॥'

ओर्महेशस्य मा लक्ष्मीरुमा, उं परमशिवं माति परिच्छिन्नति स्वातन्त्र्याज्ज्ञेयीकरोतीति उमा 'शैवी मुखमिहोच्यते' इति। 'विज्ञानभट्टारके'—

'यथालोकेन दीपस्य किरणैर्भास्करस्य च।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये॥' (वि० भै० २१)

इति। श्रीमानुत्पलदेवाचार्यः—

'आत्मानमत एवायं ज्ञेयीकुर्यात्पृथक्स्थिति।
ज्ञेयं न तु तदौन्मुख्यात्खण्ड्येतास्य स्वतन्त्रता॥'

इति, अतसीकुसुमोपमत्वादभेदोपचाराद्वोमा। हरिद्रावर्णवत्त्वात्तत-

म्भनकर्मोचितध्यानादौ वा, कीर्तिकान्तिस्वरूपवत्वाद्वा। सप्तशत्यां तु—

'या देवी सर्वभूतेषु कीर्तिरूपेण संस्थिता।
कान्तिरूपेणेति वा।'
'उमाऽतस्यां हैमवत्यां हरिद्रा कीर्तिकान्तिषु।'

इति। उ इत्यामन्त्रणे मेति निषेधे। बाल्ये तपसे प्रवृत्ता मात्रा मेनया संबोध्य निषिद्धत्वादिति वोमा। तदुक्तं 'कालिकापुराणे'—

'यतो निरस्ता तपसे वनं गन्तुं तु मेनया।
उ मेति तेन सोमेति नाम प्राप तदा सती॥'
'ब्रह्माण्डेऽपि'—
'अपर्णा तु निराहारा तां माता प्रत्यभाषत।
उ मा इति निषेधन्ती उमेत्येव तदा, भवत्॥
सा तथोक्तानया मात्रा देवी दुश्चरचारिणी।
तेनैव नाम्ना लोकेषु विख्याता सुरपूजिता॥'

पाद्मे 'पुष्करखण्डे'—

'ततोऽन्तरिक्षाद् दिव्या वागब्रवीद्भुवनत्रये।
उ मेति तु त्वया मेने यदुक्तं तनयां प्रति॥
उमेति नाम तेनास्या भुवनेषु भविष्यति।

उ—उत्तमा च सा मा—चित्तवृत्तिश्चेति वा। तदुक्तं 'सूतसंहितायाम्'—

परानुभूतिं भवपाशनाशिनीं
सदाशिवस्याप्यतिशोभनाढ्याम्।
उमाभिधामुत्तमचित्तवृत्तिं
नमामि नानाविधलोकवैभवाम्॥

इति। यद्वा—उमामिति ज्ञानप्रदत्वेनाम्नाता उमानाम्नी ब्रह्मविद्या— "स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं

ताँ होवाच किमेतद्यक्ष्या[1]मिति ब्रह्मेति होवाचेत्यादि केनोपनिषच्छ्रुतेः'। (केनो० ३-१२) 'स्कान्दे'—

'ईदृशी परमा विद्या शाङ्करी भवनाशिनी।
प्रसादादेव जन्तूनां शक्तेरेव हि जायते ॥'

'सूतसंहितायां तु'—

'विद्यारूपा या शिवा वेदवेद्या
सत्यानन्दानन्तसंवित्स्वरूपा।
तस्या वाचः सर्वलोकैकमातु-
र्भक्त्यैव स्यादम्बिकायाः प्रसादात् ॥'

इति। अथवा—विष्णुशिवब्रह्मवाचकैः प्रणवमात्रात्मकैरक्षरैर्घटितत्वात्तन्मूर्तित्रयात्मिकेति प्रणवार्थोऽत्र योजनीयः। अत एवास्य पदस्य देवीप्रणव इति संज्ञेति रहस्यविदः। तदुक्तं 'लैङ्गे'—

'अकारोकारमकारा मदीये प्रणवे स्थिताः।
उकारं च मकारं च अकारं च क्रमेरितम् ॥
त्वदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तमम्।'

इति। यद्वा—शिवसूत्रेषु—'इच्छाशक्तिरुमा कुमारी' (१-१३) इति सूत्रे योगिनामिच्छा या उमेति संज्ञोक्ता तद्रूपा वा। तदुक्तं—

'परभैरवतामुक्तां ग्रसमानस्य शाश्वतीम्।
तस्यैव योगिनो येच्छा शक्तिस्तां निगदन्त्युमाम् ॥'

इति यद्वा—'उमा देवीविनायके' इति पाद्माद्विनायकपीठाधिष्ठात्री, 'उमा सिन्धुवने नाम्ना' इत्युक्ते ऋषिकन्या, कन्यारूपा वा, 'उमा षड्वार्षिकी मतेति' कन्याप्रकरणे धौम्यवचनात्। इत्यादिनामभिस्त्वां स्तुवन्ते। अत्रेतिशब्दाः शब्दपरत्वेऽप्यर्थपरतामाचक्षते ॥ २२ ॥

---

1. किमेतद्यक्षम् इति पाठान्तरम्

ननु कथमुभौ भोगमोक्षौ तत्कामानां सिद्ध्यत इत्याशङ्क्य तत्र हेतुभावेन षोढोपास्तिं सूचयन् स्तौति—

उद्दामकामपरमार्थसरोजषण्ड-
चण्डद्युतिद्युतिमु[1]पासित षट्प्रकाराम् ।
मोहद्विपेन्द्रकदनोद्यतबोधसिंह–
लीलागुहां भगवतीं त्रिपुरां नमामि ॥ २३ ॥

दाम्नो मर्यादाया उत्क्रान्ता उद्दामानो निरवधयः, काम्यन्ते इति कामा लौकिकालौकिकभोगजातानि परमोपादेयत्वेनार्थ्यमानत्वादर्था अतिशयेनार्थनीयाश्चाणिमादिसिद्धयस्तान्येव सरोजषण्डानि कमलवृन्दानि तत्र चण्डद्युतेस्तीक्ष्णकिरणस्यार्कस्येव द्युतिदीप्तिविकासयित्री, यथार्कदीप्त्या सरोजानि विकासं यान्ति तद्वद्भगवतीप्रसादेन समस्तं काम्यमवाप्यते इत्यर्थः । कीदृशीं उपासिताः साधकजनैः परिचरिताः षट्प्रकाराः शैववैष्णवादयः षडुपासनामार्गास्तत्प्राप्तिसाधनत्वाद्यस्यास्ताम् । तदुक्तं 'कुलार्णवे'—

'शैववैष्णवदौर्गार्कगाणपत्येन्दुसम्भवैः ।
मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं प्रकाशते ॥
इन्दुसभवं जैनदर्शनम् ।'

अत्रायं भावः—प्राग्जन्मनि कृतषड्विधोपासामुपासकानामेवेह जन्मनि श्रीसुन्दर्या उपास्तिलाभे सति कुलज्ञानाद्भोगापवर्गरूपयामलसिद्धिः स्यादित्येतदाशयेन श्लोकप्रथमोत्तरार्धयोरर्थोपन्यासः कृत इत्यूह्यम् । यद्वोपासिताः षट्प्रकारा डरलकशहादयो भेदा यस्यास्तां, षट्स्वाधारसरोजेषु तत्कर्णिकास्थं धात्वधिदेवतारूपेण कृताराधनाम् । यद्वा षड्भिः प्रकारैः षोढा गणेशग्रहादिशक्तिभिरुपासितां तद्रूपिणीमित्यर्थः ।

1. 'मपासितषड्विकारम्' इति पाठान्तरम् ।

अथ च महाषोढोक्तप्रपञ्चादिशक्तिरूपिणीं। यद्वाषट्शाम्भवान्वयरीत्या परेश्वरपरेश्वर्यादिषोढास्वरूपेणोपासितां राजदन्तादित्वात्पूर्वभावः। मोहोऽविवेकरूपमाया सा सुप्तं स एव प्रबलोन्मत्ततया द्विपेन्द्रो गजेन्द्रस्तस्य कदनं निधनं तत्रोद्यतः स्वीकृतनिजहृदयोद्यमो बोधो भैरवीयचित्प्रकाशरूपः सिंहः केसरी तस्य लीलागुहां विलासस्थानं संकुचितात्मतापासनेन पूर्णाहन्ताविश्रान्तिसतत्वपरप्रकाशस्य प्रादुर्भावयित्रीमित्यर्थः। एवंविधां भगवतीं त्रिपुरां तिसृभ्यः शक्तिभ्यस्तदधिष्ठतत्रिकारणेभ्य अवस्थादित्रितयाच्च पूर्वभवत्वात् त्रिपुराशब्दवाच्यां महात्रिपुरसुन्दरीं परिपूर्णाहन्तात्मिकामखण्डस्वसंविन्मयीं त्रैलोक्यमोहनचक्राधिष्ठात्रीं त्रिपुराख्यां वा नमामि। यदुक्तं 'स्वसंवित् त्रिपुरा देवी'ति वितत्य प्राक्निर्णीतमिदम्। नत्यर्थस्त्वभेदोपासनात्मा बोद्धव्य इति। ॥ २३ ॥

ननु केयं त्रिपुरा नाम या प्रह्वीभावेनाश्रयणीया, इत्याशङ्कमानो मुख्यशक्तिपरिवार्यमाणां तामन्तःपुरगतां परदेवतां निर्दिशति—

गणेशवटुकस्तुता रतिसहायकामान्विता
स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता।
अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः
कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ २४ ॥

गणेशो महागणपतिर्योऽसुरनिर्मितविघ्नयन्त्रितानां देवानां मोचनाय भगवत्या कामेश्वरस्य साकूतमुखावलोकनमात्रेण तद्विघ्नान्निर्भेत्तुमुदपादि। उक्तं च 'ब्रह्माण्डे'—

'ततः सा ललिता देवी कामेश्वरमुखं प्रति।
दत्तापाङ्गा समहसन्नातिव्यक्तरदावलि ॥
तस्या मन्दस्मितरुचः कुञ्जराकृतिमान्मुखे।
कटक्रोडगलद्दानः कश्चिद् देवो व्यजम्भत ॥'

इति । अथ च श्रीचक्रद्वारशाखयोः स्थितौ सशक्तिकौ गणेशो वटुकश्च क्षेत्रेशः । तदुक्तं 'संकेतपद्धत्यां'—

'द्वैताद्वैतमहामोहशर्वरीक्षपणक्षमः ।
भास्वानिव जयत्येको गणेशः दूतरीयुतः ॥
प्रतिभायाः परोल्लासो निशाकर इवापरः ।
दूतियुक्तः स जयति वटुकस्ताण्डवान्वितः ॥'–

इत्यत्र रतिसहायेत्युक्त्या गणेशवटुकयोरपि सशक्तिकत्वमुपलक्ष्यम् । तथा वटुको देवीपुत्रः कुलेशः इति प्रसिद्धस्ताभ्यां स्तुता नुता । गणा गणदेवताः षोढान्यासोक्ताश्चादित्याद्याः । यदुक्तम'ग्निपुराणे'—

'आदित्यविश्वबसवस्तुषिताभास्वरानिलाः ।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥'

इति । तथा—

महाषोढोदिताशेषदेवतागणसेवितम् ।

इति । गणानां प्रमथानां नन्दिभृङ्गिरिट्यादीनामीशो नायकः स्कन्दो, वटुर्वामनरूपी विष्णुरथवा वटवो बालखिल्यादयः, को ब्रह्मा वायुर्दक्षो भास्करोऽग्निश्च तैः स्वस्वविद्याभिरुपासिता, अथवा गणा नन्दिभृङ्गिरिट्यादयः ईशः शिवस्तथा रतिः कामपत्नी तत्सहायस्तत्सचिवस्तत्सहायो वसन्तो वा कामः स्मरस्तेनान्विता परिचरिता स्वस्वविद्याभिर्वरिवसितेत्यर्थः । अत्र रतिकामाभ्यां पञ्चाशत्तत्तन्मातृकाशक्तय उपलक्ष्यन्ते । तथा स्मरारिः कामरिपुः सदाशिव एव वरः श्रेष्ठो ब्रह्मादिचतुष्पादधृतो विष्टरो पर्यङ्कः मञ्चासनं यस्याः सा, सदाशिवमहाप्रेतपर्यङ्कात्मसिंहासनाधिरूढेत्यर्थः । विष्टरत्वोक्त्या तु आनन्दशयनाधारत्वध्वननद्वारा कामाङ्कयन्त्रणविशेषो ध्वन्यते इत्याहुराचार्याः । अत एव त्रिपुरसुन्दरीत्युक्तमिति रहस्यम् । 'अयमात्मा ब्रह्म सोऽयमात्मा चतुष्पादिति' श्रुतेः । 'तदुक्तं भैरवयामले'—

'ब्रह्मा ष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।

एते पञ्च महाप्रेताः पादमूले व्यवस्थिताः ॥
शिवात्मके महामञ्चे महेशानोपबर्हणे ।
अतिरम्यतले तत्र कशिपुश्च सदाशिवः ॥
भृतकाश्च चतुष्पादा महेशश्च पतद्ग्रहः ।
तत्रास्ते परमेशानी महात्रिपुरसुन्दरी ॥'

इति । आचार्यपादैरपि–'गतास्ते मञ्चत्व' मित्यादावुक्तम् । न चात्र ब्रह्मादय इमे मायान्तर्वर्तिनस्तेषां शाक्तदशाधिशायित्वानुपपत्तेः। तस्मात्तेषाममायेयं रूपान्तरं भगवत्याः पीठपादभावोचितम् । ईश्वरसदाशिवयोस्तु सदातनमायोत्तीर्णमेव रूपमित्यभ्यूह्यम् । यदाहुराचार्याभिनवगुप्तपादाः—

'मायोत्तीर्णं हि तद्रूपं ब्रह्मादीनां पुरोदितम् ।
आसनं त्वेतदेव स्यान्न तु मायाञ्जनाञ्चितम् ॥
रुद्रोर्ध्वे चेश्वरं देवं तदूर्ध्वे च सदाशिवम् ।
न्यसेत्स च महाप्रेत इति शास्त्रेषु भण्यते ॥
समस्ततत्त्वव्याप्तृत्वान्महाप्रेतः प्रबोधतः ।
प्रकर्षगमनाच्चैष लीनो यन्नाधरं व्रजेत् ॥' (तं १५-३०८-१०)

व्रजेदिति परमेव शिवमुपाश्रयतीत्यर्थः। इदमासनं वामदक्षिणोभयतन्त्रमार्गसाधारणम् । तथा कुसुमबाणैः पौष्पैर्बाणैर्मोहनवशीकरणाद्यात्मकैः पञ्चभिर्युता, उपलक्षणमेतत्तेन सायुधचतुष्पाणिशोभितामिति। एतदायुधानां तु वासनात्मकं रूपं यथा 'पूर्वचतुःशती शास्त्रे'— 'पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ' । इति । 'तन्त्रराजेऽपि'–

'मनोभवेदिक्षुधनुः पाशो राग उदाहृतः ।
द्वेषः स्याद शः पञ्च तन्मात्राः पुष्पसायकाः ॥'

इति । 'उत्तरचतुःशत्यां' तु—

'इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥'

इति । 'वामकेश्वरे' तु--

'शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनुः ।'

इति, 'कादिमते'--

'बाणास्तु[1] त्रिविधाः प्रोक्ताः स्थूलसूक्ष्मपरत्वतः ।
स्थूलाः पुष्पमयाः सूक्ष्मा मन्त्रात्मानः समीरिताः ॥
पराश्च वासनायां तु प्रोक्ताः स्थूलाञ्छृणु प्रिये ।
कमलं कैरवं रक्तकल्हारेन्दीवरे तथा ।
सहकारकमित्युक्तं पुष्पपञ्चकमीश्वरि ॥' (प० ५ ४८-५०)

तेषां नामानि तु--

'हर्षणं रोचनाख्यं च मोहनं शोषणं तथा ।
मारणं चेत्यमी बाणा मुनीनामपि मोहदाः ॥'

इति, 'ज्ञानार्णवे' तु--

'क्षोभणं द्रावणं देवि ! तथाकर्षणसंज्ञकम् ।
वशोन्मादौ क्रमेणैव नामानि परमेश्वरि ॥'

इति । 'तन्त्रराजे' तु--

'मदनोन्मादनौ पश्चात्तथा मोहनदीपनौ ।
शोषणश्चेति कथिता बाणाः पञ्च पुरोदिताः ॥' (७ प० १३)

इति । तथानङ्गकुसुमादिभिरनङ्गकुसुमा अनङ्गमेखला--अनङ्गमदना-अनङ्गमदनातुरा-अनङ्गरेखा-अनङ्गवेगिनी-अनङ्गाङ्कुशा--अनङ्गमालिनीत्याख्याभिः सर्वसंक्षोभकारके चक्रे गुप्ततरशक्तिभिर्वसुदलाधिष्ठात्रीभिः परिवृता मण्डलिता संनिहितत्वात् । त्रिभिः सिद्धैश्च मित्रेशादिभिर्युगगुरुभिश्च,अन्तस्त्रिकोणे सर्वसिद्धिप्रदाख्ये धाम्नि पूजनीयैरावृता संनिहिततरत्वात् । कदम्बवनमध्यगा श्रीपुरगर्भे कदम्बवने नीपादिवृक्षोपशोभिनि नन्दनोद्याने मध्यस्था दिव्यमण्डपे भद्रासनासीना

---

1. बाणाःस्युस्त्रिविधाः इति पाठान्तरम् आर्थर अवलान सम्पादिते

श्रीत्रिपुरसुन्दरी प्रोक्तचक्रनायिका त्रिषु जागरादिपुरेषु अवभास्यमानाशेषविश्ववैश्वात्म्यसामरस्येन स्फुरणात् सुन्दरी चिदानन्दघना ललिताख्या उर्ध्वसिंहासनविद्यासु प्रथमसुन्दरीसंज्ञका वा, त्रीणि पुराणि ब्रह्मविष्णुशिवशरीराणि यस्य स त्रिपुरः परमशिवस्तस्य सुन्दरी रमणी । यदुक्तं 'कालिकापुराणे'—

'प्रधानेच्छावशाच्छम्भोः शरीरमभवत् त्रिधा ।
तत्रोर्ध्वभागः संजातः पंचवक्त्रश्चतुर्भुजः ॥
पद्मकेसरगौराङ्गः कायो ब्राह्मो महेश्वरे ।
तन्मध्यभागो नीलाङ्ग एकवक्त्रश्चतुर्भुजः ॥
शंखचक्रगदापद्मपाणिः कायः स वैष्णवः ।
अभवत्तदधोभागे पञ्चवक्त्रश्चतुर्भुजः ॥
स्फटिकाभ्रमयः शुक्लः स कायश्चान्द्रशेखरः ।
एवं त्रिभिः पुरैर्योगात् त्रिपुरः परमः शिवः ॥'

इति । यद्वा त्रिषु पुरेषु मातृमानमेयपदेषु सुन्दरी सततावभासितस्वरूपा स्वप्रकाशत्वात् । तदुक्तमभिनवगुप्तपादैः—

'तेन संवित् त्रिकात्मैव मातृमानप्रमेयताम् ।
गृह्णती स्वप्रकाशत्वस्वभावादेव भासते ॥
सा चान्तः स्थितमन्त्रात्मशब्दनामर्शसुन्दरा ।
अनपेक्षान्यविरहात्प्रमाणं स्वत एव हि ॥'

इति । नोऽस्मान् पातु पायादव्यादित्याशंसायां लोट् ॥ २४ ॥

एवं वाग्विस्फारफलकामिनां स्थानाद्युल्लेखनपूर्वं निर्दिष्टदेवतोपास्तिं सफलां काव्यलिंगेन समर्थयति—

त्वामैन्दवीमिव कलामनुभालदेश-
मुद्भासिताम्बरतलामवलोकयन्तः ।
सद्यो भवानि ! सुधियः कवयो भवन्ति
त्वं भावनाहितधियां कुलकामधेनुः ॥ २५ ॥

हे भवानि ! भवस्य परब्रह्मणः पत्नी सततसमवेताशक्तिस्तदामन्त्रणं । मृडानीति पाठे प्राग्वत्सुखयित्रीत्यर्थः । त्वां कलां तथातथाविश्वोल्लेखशालिनीं शक्तिमुद्भासितमम्बरतलं यया तामुत्तेजितचिदाकाशस्वरूपामनुभालदेशं ललाटसमीपे ऐन्दवीमिन्दोश्चन्द्रस्य सम्बन्धिनीं कलां लेखामिवाह्लादिनीं सापि स्वज्योत्स्नयाकाशतलमुद्भासयति, अवलोकयन्तो ध्यायन्तः सुधियः प्रज्ञावन्तः सद्यो भावनापरिपाकसमनन्तरमेव कवयः सद्गुणालङ्काररसमाधुर्योपेतसत्सन्दर्भसूक्तिरचनाप्रतिभाशालिनो भवन्ति । एतदेव द्रढयति—यतस्त्वं भावनया प्रोक्तरूपध्यानपरिशीलनजन्यसंस्कारेण । यद्वा—भावना सकल–सकलनिष्कल–निष्कलरूपत्वेन त्रिधा । यदुक्तं 'योगिनीहृदये'—

'आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ।
उन्मन्यन्ते परे स्थाने निष्कलं च त्रिधा स्थितम् ।'

अत्रानुभालदेशमित्युक्तेराज्ञान्तसकलाख्यभावनयाहितधियामधिवासितप्रज्ञानां कुले वंशे कामान् दोग्धीति कामधेनुः कामानां काम्यमानानामर्थानां धेनुरिव दोग्ध्री प्रपूरणीत्यर्थः । पूर्ववद्ध्यानमधिगम्यम् । कामधेनुश्च सुरभिनाम्नी यत्प्रसादाद्वसिष्ठो मुनिर्विश्वामित्रस्य राज्ञः ससेनापरिच्छदस्यातिथ्यं राजोचितं चक्रे इति महाभारतीयकथोदाहरणत्वेनात्रानुसन्धेया इति ।। हि इत्यध्याहार्यम् ।। २५ ।।

नन्वशुद्धचेतसामुपासनाधिकारायोग्यत्वेऽभीष्टफलसिद्धिः कथं स्यादित्याशंक्य तदधिकारापादनायैव मलसंस्काराद्युच्छेदपूर्वं तच्छुद्धिं प्रार्थयते—

**उत्तप्तहेमरुचिरे ! त्रिपुरे ! पुनीहि**
**चेतश्चिरन्तनमघौघवनं लुनीहि ।**
**कारागृहे निगडबन्धनपीडित[1]स्य**
**त्वत्संस्मृतौ झटिति मे निगडास्त्रुटन्तु ॥ २६ ॥**

1. यन्त्रितस्येति पाठान्तरम्

उत्तप्तं द्रुतं शोधितं यद्धेम कनकं तद्वद्रुचिरे ! सुन्दरि ! हे त्रिपुरे ! एतन्निर्वचनं बहुधा प्राक् प्रोक्तमग्रेऽपि निर्वक्ष्यते। त्रिपुरापदव्युत्पत्तिस्तु 'वाराहीये'—

'ब्रह्मविष्णुमहेशाद्यैस्त्रिदशैरर्चिता पुरा।
त्रिपुरेति तदा नाम कथितं दैवतैस्तव ॥'

इति। यद्वा–त्रिपुरे इति सप्तम्यन्तं त्रयाणां पुराणां स्थूलसूक्ष्मकारणात्मनां देहानां संहारस्त्रिपुरं तस्मिन् द्रुतस्वर्णवद्दीप्यमाना तुरीया कापि संविच्छक्तिस्तत्सम्बोधनं हे उत्तप्तहेमरुचिरे ! मे मम चेतो मानसं पुनीहि पवित्रीकुरु त्वदुपासनोचितं सम्पादयेत्यर्थः। तथा तत्स्थं चिरस्य भवत्वात् चिरन्तनं पुराणमनेकवासनाप्रतानवलितमघौघवनं पापौघकाननं लुनीहि लूनीकुरु अनुद्भविष्यदङ्कुरक्षमं सम्पादयेत्यर्थः। भगवत्या नामस्मृतिकीर्तनेन हि पापशान्तिर्जायते तथा च 'कूर्मपुराणे'—

'शमायालं जलं वह्नेस्तमसो भास्करोदयः।
शान्त्यै कलेरघौघस्य देवीनामानुकीर्तनम् ॥'

इति 'ब्रह्माण्डेऽपि'—

'कृतस्याखिलपापस्य ज्ञानतोऽज्ञानतोऽपि वा।
प्रायश्चित्तं परं प्रोक्तं पराशक्तेः पदस्मृतिः ॥'

इति। तथा कारागृहे संसाररूपबन्धनालये निगडाः शृंखलाः शुभाशुभकार्ममललक्षणास्तैर्यद्बन्धनं तत्तत्संकुचिततरप्रमातृभूमिकाग्रहणं तेन पीडितस्य तत्तत्क्लेशानुभवेन दुःखितस्य मम त्वत्संस्मृतौ तव ध्याने हेतौ झटिति मङक्षु त्रुटन्तु विच्छिद्येरन् इति आशंसायां लोट्। अत्र शुभमपि कर्माशुभकर्मवद्बन्धनसाधनं तदुक्तमभियुक्तैः—

'पातकप्रचयवन्मम तावत्पुण्यपुञ्जमपि नाथ ! लुनीहि।
काञ्चनी भवतु लोहमयी वा शृङ्खला यदि पदोर्न विशेषः ॥'

इति। अत्र हेतौ सप्तमी। तिसृभिः क्रियाभिर्मलत्रयापाकरणं प्रा-

र्थ्यते इति ज्ञेयं । कारागृहादपि त्वमेव मोचयित्रीत्यर्थः । यथा बाणासुरपुरेऽनिरुद्धस्य देवीकृतं मोचनम् । तदुक्तं 'हरिवंशे'—

'एभिर्नामभिरन्यैश्च कीर्तिता ह्यसि शाङ्करि ।
त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येय बन्धनात् ॥
अवेक्षस्व विशालाक्षि ! पादौ ते शरणं व्रजे ।
सर्वेषामेव बन्धानां मोक्षणं कर्तुमर्हसि ॥'

इत्यारभ्य—

'एवं स्तुता तदा देवी दुर्गा दुर्गपराक्रमा ।
बद्धं बाणपुरे वीरमनिरुद्धं व्यमोचयत् ॥'

इत्यन्तम् । एवमेकावलीनामिका राजकन्यकापि कालकेतुदानवेन बद्धा तत्सख्या यशोवत्या स्वोपासितभगवतीमन्त्रबलान्मोचितेति कथा देवीभागवते षष्ठस्कन्धे स्मर्यते इति ॥ २६ ॥

एवं प्राप्तचेतःशुद्धीनामपि कामार्थितया कीदृग्ध्येयमित्याशयेन राजसध्यानं सफलं वर्णयति—

रुद्राणि ! विद्रुममयीं प्रतिमामिव त्वां
ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम् ।
तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते
कण्ठावसक्तमृदुबाहुलतास्तरुण्यः ॥ २७ ॥

रुद्रस्य जन्मादिरुजां द्रावयितुः शिवस्य सम्बन्धिनी शक्तिस्तत्संबुद्धिः, हे रुद्राणि ! इत्येतदामन्त्रणपदमरुणवर्णानुगुणतया विवेच्यमतस्तादृशोपमानाभिधानम् । विद्रुममयीं लोध्रकाष्ठप्रकृतिं तन्निर्मितामित्यर्थः, प्रतिमां प्रतिच्छायामिव त्वां भवतीमरुणकान्तिं रक्तवर्णां सूर्यकान्तिं वोज्ज्वलामुदयास्तमयराहित्यात् । 'नहि द्रष्टुर्दृष्टेर्विपरिलोपः' इति श्रुतेः (बृह० ४-३-३२) । तदुक्तम्—

'अनस्तमितभारूपस्तेजसां तमसामपि ।
य एकोऽन्तर्यदन्तश्च तेजांसि च तमांसि च ॥'

इति । शुद्धं शान्तं लयोदयविहीनमिति च । तथानन्यरूपामविद्यमानमन्यत्सदृशं रूपं यस्यास्तामनुपमां । यद्वानन्यरूपामभिन्नरूपामेतेनाभेदोपासना सूच्यते । ये चिन्तयन्ति स्मरन्ति तांस्त्वदुपासकानेत्योपेत्य पक्ष्माण्यक्षिरोमाणि विद्यन्ते ययोस्ते पक्ष्मले 'मत्वर्थीयो लच्' दृशौ चक्षुषी यासां ताः पक्ष्मलदृशः सुलोचनास्तरुण्य आरूढयौवनाः श्यामा इत्यर्थः, प्रसभं हठाद्भजन्ते सेवन्ते आश्लिष्यन्तीत्यर्थः । कीदृश्यः कण्ठे साधकग्रीवायामवसक्ता लग्ना मृद्व्यः कोमला बाहुलता भुजवल्लर्यो यासां ताः । अत्रापि कामेश्वरीध्यानाभिप्रायमेतदिति ॥ २७ ॥

तदेव भङ्ग्यन्तरेण प्रपञ्चयति—

त्वद्रूपमुल्लसितदाडिमपुष्परक्त-
मुद्भावयेन्मदनदैवतमक्षरं यः ।
तं रूपहीनमपि मन्मथनिर्विशेष-
मालोकयन्त्युरुनितम्बतटास्तरुण्यः ॥ २८ ॥

उल्लसितमुत्फुल्लं यद्दाडिमपुष्पं दाडिमी (करक) लतायाः कुसुम तद्वद्रक्तं मसृणारुणवर्णं मदनदैवतं कामराजबीजाधिदैवतमक्षरं वर्णमविनश्वरं च त्वद्रूपं तद्वपुर्निष्कलं कामकलात्मकं य उद्भावयेदुत्कर्षतया हृदि स्वात्माभेदेन परिशीलयेत् । तं रूपहीनं रूपाख्यगुणरहित विरूपमपि मन्मथनिर्विशेषं कामान्निष्क्रान्तविशेषं कमनीयत्वात्कामोपमम् । उरुनितम्बतटा बृहन्नितम्बप्राग्भारास्तरुण्य आरूढयौवनाः कामिन्य आलोकयन्ति पश्यन्त्यभ्युपगच्छन्ति मदनभ्रमेण भ्राम्यन्तीत्यर्थः । ध्यानं प्राग्वद् बोध्यम् ॥ २८ ॥

ननु किं लक्षणोपासना कार्येत्याशंक्य तत्प्रकारमुपक्षिपन् स्वस्य तदासक्तिं नैरन्तर्येणाशास्ते—

त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशोस्त्वद्गुण-
ग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि ।
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तनं वाचि मे
कुत्रापि त्वदुपासनव्यसनिता मे देवि ! मा शाम्यतु ॥ २९ ॥

हे देवि ! मे दृशोर्नेत्रयोस्त्वद्रूपस्य भवत्या वपुर्लावण्यगुणस्य यदेकं मुख्यं निरूपणं तत्सौन्दर्यामृतरसलहरीचमत्कारविषयतया परामर्श-स्तत्र प्रणयिताबन्धः प्रेमग्रन्थिर्भूयात्, वेद्यान्तरपरिहारेण भवत्या रूप-सौन्दर्यैकविषयासक्ते दृशौ मदीये भवेतामित्याशंसा । श्रवणयोः कर्ण-योस्त्वद्गुणग्रामाणां तव शौर्यादिगुणेषु गीयमानेषु विषये ये ग्रामाः कण्ठोत्थाः षड्जादिस्वरविशेषास्तेषामाकर्णने श्रवणे रागितानुरक्तिः, मत्कर्णौ तव गुणग्रामश्रवणानुरक्तौ भवेतामित्यर्थः । षड्जादिलक्षणं यथा—

'नासां कण्ठमुरस्तालुजिह्वां दन्तांश्च संस्पृशन् ।
षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः ॥
तद्वदेवोत्थितो वायुरुरःकण्ठसमाहतः ।
नाभिं प्राप्तो महानादो मध्यस्थस्तेन मध्यमः ॥
वायुः समुद्गतो नाभेरुरो हृत्कण्ठमूर्धसु ।
विचरन्पञ्चमस्थानप्राप्त्या पञ्चम उच्यते ॥'

इति । नारदः—

'षड्जं रौति मयूरस्तु गावो नर्दन्ति चार्षभम् ।
अजाविकौ च गान्धारं क्रौञ्चो नर्दति मध्यमम् ॥
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ।
अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः ॥'

इति । यद्वा—गुणसमूहानां भण्डासुरवधादिशौर्यादीनां, महिषासुर-युद्धवधचरितानां, जगत्सृष्टिपालनादीनां पञ्चकृत्यानां चाकर्णने श्रवणे

रागितानन्यमनस्कतयासक्तिरिति। उपलक्षणमेतत्, तेन धीन्द्रियान्तराणामपि यथास्वं व्यापारो ज्ञेयः। तथा तत्तद्दृष्टश्रुतरूपगुणानुभवजन्यसंस्कारोद्बोधिता चेतसि तव संस्मृतिरिति। बाह्येन्द्रियजन्यव्यापारोपरतौ सत्यां मदीयं मनस्त्वत्स्मरणैकप्रवणं भवत्वित्यर्थः बुद्धिव्यापारस्यापि एतदुपलक्षणम्। तथा करयुगे करयोस्त्वत्पादार्चनायां गन्धपुष्पाद्युपचारार्पणलक्षणायां तव चरणाब्जयुगलार्हणायां चातुरी दाक्ष्यं कृतहस्तता, तथा वाचि वाण्यां त्वत्कीर्तनं त्वदीयानामुक्तगुणानां सम्यग्वर्णनं भूयादिति सर्वशेषः। पादेन्द्रियव्यापारस्यापि प्रदक्षिणादेरिदमुपलक्षणम्। तदुक्तं—

'मधुकैटभनाशं च महिषासुरघातनम्।
कीर्तयिष्यन्ति ये तद्वद्वधं सुम्भनिसुम्भयोः॥'

इत्यादि।

कुत्रापि कस्मिंश्चदपि देशे कालेऽवस्थासु वा त्वदुपासने उक्तदर्शनाकर्णनस्मरणकीर्तनादिरूपे व्यसनिता व्यासक्तिर्मे मम मा शाम्यतु शान्ता माभूदित्यर्थः। एवमीदृशार्चाव्यापारे करणवर्गस्य सर्वथा निरन्तरया देवीस्वरूपपरिशीलनपरत्वेन मलहानिपूर्वं पूर्णानन्दव्याप्त्या विशुद्धतासादनमभिप्रेतमिति। तदुक्तम्—

'परानन्दमहाव्याप्तिरशेषमलविच्युतिः।
शिवे गन्तृत्वमादानमुपादेयशिवस्तुतिः॥
शिवामोदभरास्वाददर्शनस्पर्शनान्यलम्।
तदाकर्णनमित्येवमिन्द्रियाणां विशुद्धता॥'

इति। ततोऽपि परदेवताभावाभिव्यक्तिरेव परं प्रयोजनम्। अत्रायं माशब्दो न तु माङ तेन लुङलिङोरप्रसङ्गः। आशंसायां लोट्॥ २९॥

अस्य स्तोत्रस्य केवलं कीर्तने श्रवणेऽपि वा प्रागुक्तविद्योपासनाफलभागित्वमस्तीत्याह—

यस्स्तोत्रमेतदनुवासरमीश्वरायाः
श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्येप्सितं फलति राजभिरीड्यतेऽसौ
जायेत स प्रियतमो मदिरेक्षणानाम् ॥ ३० ॥

यो भक्तिमानीशनशीलायाः पूर्णैश्वर्यसंपन्नत्वादीश्वरायाः अजाद्यदन्तत्वात् टाप् । न तु पुंयोगे ङीष् । महात्रिपुरसुन्दर्या अनुवासरमन्वहं श्रेयो भोगमोक्षरूपं तद्धेतुताच्छील्यानुलोम्यैः करोतीति करमैहिकामुष्मिकक्षेमकारि एतत्स्तोत्रं स्तवं यदि पठति कीर्तयति शृणोति वा, पाठस्य फलविपाकं यावदावृत्त्या परिशीलनं, श्रवणस्यापि तत्समन्तरपाठाभ्यासतत्फलपर्यन्तपर्यवसानत्वमनुवासरशब्देन बोध्यते । अन्यथा सकृत्पठनाद्यभिधानं स्यात् । तस्येप्सितमभीष्टं फलति निष्पद्यते । ह्यसौ राजभिरीड्यते भूपैः स्तूयते । मदिरो मत्तखञ्जनस्तद्वद्रुचिरे ईक्षणे नेत्रे यासां मदिरेक्षणानां खेलत्खञ्जनाक्षीणां वामलोचनानां स प्रियतमः प्रेयाञ्जायेत, संभावनायां लिङ । अत्र तिसृभिः क्रियाभिस्त्र्यक्षरीविद्योपासनायाः त्रिधाफलमभिधीयते ॥ ३० ॥

इदानीं मङ्गलप्रयोजनत्वेन स्तोत्रान्तेऽपि परदेवतायां स्वप्रह्वीभावं परामृशन् स्तवमुपसंहरति—

ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि-
स्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि ! त्रिभुवनेश्वरि ! विश्वमात-
रन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ ३१ ॥

इति श्रीधर्माचार्यकृतौ पञ्चस्तव्यां चर्चास्तवो द्वितीयः ॥ २ ॥

हे वागीश्वरि ! त्रिभुवनेश्वरि ! विश्वमातरिति संबोधनपदत्रयं कूटत्रयाधिष्ठातृदेवतार्थानुरूप्येण तत्तदनुगुणफलवितरणाभिमुखीकरणाभिप्रायतो बोध्यम् । अष्टसरस्वतीष्वेका वागीश्वरी नामधेया तद्रूपा च, 'वागेव विश्वा भुवनानि जज्ञे' इति श्रुतेः विश्वयोनिः । 'वामकेश्वरे'—

'वागीश्वरि ज्ञानशक्तिर्वाग्[1]भवे मोक्षदायिनी ।'

इत्युक्तेर्वाग्बीजाधिष्ठात्रीत्यर्थः । तथा—

'काम[2]राजे क्रियाशक्तिः कामेशी कामरूपिणी ।'

इति कामबीजाधिष्ठात्री कामेश्वरीत्यर्थः । तथा—

'शक्ति[3]बीजे पराशक्तिरिच्छैव शिव[4]रूपिणी ।
एवं देवी त्र्यक्षरी तु महात्रिपुरसुन्दरी ।।' (४-१७-१८)

इति शक्तिबीजाधिष्ठात्री पराशक्तिरित्यर्थः ।

'ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्मपश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्टम्' इति श्रुतेः (मुंड २-२-११) अन्तर्बहिश्च परापरप्रकृतिभावेन कृता संस्थितिरवस्थानं यया तस्यै ते तुभ्यं नमोऽस्माकं त्वयि कायवाङ्मनसां तदेकप्रवणतालक्षणः प्रह्वीभावो भूयादित्याशास्यते । यद्वा—अन्तरिति सर्वेषामन्तर्जीवरूपेण 'अनेन जीवेनैवात्मनानुप्रविश्ये'ति श्रुतेः । तथा बहिस्तेजोऽबन्नादिरूपेण, यद्वान्तः सूक्ष्मेण बहिःस्थूलेन रूपेणेति । 'यदाहागमः'—

अणोरणुत्तरा देवी महतोऽपि महीयसी ।

श्रुतिश्च—अणोरणीयान्महतो महीयान्' इति । (कठो०-२-२०)

अथ चान्तर्बहिश्चेति कार्यकारणभावेन तदभेदव्यपदेशेन वा 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत इति श्रुतेः (छांदो० ३-१४ १) ।

---

1. वाग्भवा 2. कामराजा 3. शक्तिबीजा 4. विषरूपिणी पाठान्तराणि कौ०

'यथासौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं-
स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।'

इति श्रुत्या (छांदो० ६-१-४) हेतुहेतुमद्भावेनोभयथैकमेव वस्तु चकास्तीति तदतिरिक्तं किमपि वस्तु नास्तीति ।

'यस्मात्परं नापरमस्ति किंचित्' इति श्रुतेः (श्वेता० ३-९) ।
'इदं ब्रह्मेदं क्षेत्रमिमे लोका इमे देवा इमानि'
'भूतानीदं सर्वं यदयमात्मा इत्यादि श्रुतेश्च (बृह० २-४-६) ।'

तुभ्यं कीदृश्यै, ब्रह्मा विधिरिन्द्रः शक्रः, अथवा इन्द्रा ब्रह्मविदः । इदमित्यपरोक्षेण ये साक्षिणः स्वात्मभूतं ब्रह्माहमस्मीति साक्षात्कुर्वन्ति ते इन्द्राः । 'इदमदर्शदिदमदर्शमिति तस्मादिन्द्रो नामेति' श्रुतेः अपि चेन्द्र आत्मा ।

'स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिति तस्मादिन्द्रो
नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्रमित्याचक्षते' ।

इति श्रुतेः (ऐत० २-३-१३) । रुद्रः शिवः, हरिशब्देन विष्णुनागराजधर्मराजवायवो गृह्यन्ते तथा च विश्वः—

'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु ।
सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च ।।
हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः ।'

इति विष्णुनाराध्यत्वं यथा 'पाद्मे'—

'इन्द्रनीलमयीं देवीं विष्णुरर्चयते सदा ।
विष्णुत्वं प्राप्तवांस्तेन' इत्यादि ।।

चन्द्रः सोमः, सहस्ररश्मिः सूर्यः, सूर्याराध्यत्वं यथा 'पद्मपुराणे'—

'देव्याः रत्नमयीं मूर्तिं भक्त्या नित्यं दिवाकरः ।
पूजयित्वाप्तवान्दिव्यं सूर्यत्वं शुभमुत्तमम् ।।'

इति स्कन्दः कुमारो द्विपाननो गणेशो, हुताशनोऽग्निरेतैर्ब्रह्मादिभिरग्निपर्यन्तैर्द्वादशभिः श्रीविद्योपासकैः पृथक् पृथक् स्वस्वाधिकारपदवीप्राप्त्यै स्वस्वविद्याभिर्वन्दितायायुपासितायै । एतेन ब्रह्मादीनामप्यैश्वर्यलाभस्त्वदधीन एव किम्वन्येषामिति भावः ।।

इति श्रीमहामाहेश्वरपण्डितहरभट्टशास्त्रिविरचितायां

## पञ्चस्तवीटीकायां

द्वितीयःस्तवः ॥



वल्ली कापि पुरत्रयेषु विलसत्येकाकिनी विस्फुर-
न्नानावर्णदशा पलाशखचिता शाखाप्रतानाग्रणीः ।
यस्मिन् नैकफलोरुभारविनतस्वङ्गा तुरीया स्तवे
तस्मिन् प्राथमिकेतरे विवरणं पूर्णं परानुग्रहात् ।।



## INDEX I

## प्रथमस्तवटीकानिर्दिष्टानांलेखकानामनुक्रमणीयम्





# INDEX II

## प्रथमस्तवटीकानिर्दिष्टानांग्रन्थानामनुक्रमणिका

## INDEX III

### प्रथमस्तवान्तर्गता विशिष्टपदानुक्रमणिकेयम

पृष्टम् ङ्क्तिः





## पञ्चस्तव्या द्वितीयेस्तवे निर्दिष्टानामाचार्याणामनुक्रमणिका

## द्वितीयस्तवनिर्दिष्टानांग्रन्थानामनुक्रमणिका

# पञ्चस्तव्या द्वितीयेस्तवेनिर्दिष्टानामाचार्याणामनुक्रमणिका

| म् | पंक्ति |
|---|---|
| मदिरेक्षणा ५७ | ४ |
| मन्मथः ५४ | १४ |
| मृडानी २१ | २१ |
| माता २३ | १४ |
| मालिनी ३४ | ६ |
| मोहद्विन्द्रः ५४ | ५ |
| रतिसहायः ४६ | १५ |
| रुद्रः ५७ | १८ |
| रुद्राणी ५३ | १५ |
| ललिता ३४ | ६ |
| लक्ष्मीवशीकरणकर्म १७ | ७ |
| लीलागुहा ४५ | ६ |
| वाक् २५ | १५ |
| वागधिदैवतम् २५ | १२ |
| वागीश्वरी ५७ | २० |
| वाग्विलासः ३३ | १३ |
| (वाचस्पतिः) ६ | ५ |
| विजया ३४ | ५ |
| (विद्याधरः) १३ | ७ |
| विश्वमाता ५७ | २० |
| व्यापिनी ३४ | ४ |
| शिवः २९ | २० |
| शर्वाणी २७ | ५ |
| षट्प्रकारा ४५ | ४ |
| सिद्धमन्त्रः १७ | २० |
| सहस्ररश्मिः ५७ | १८ |
| सुन्दरी ३३ | १३ |